# शिखा-विकृतिः

अन्तश्चरति चरत्यन्तरन्तश्चरति रोचना॥ अन्तरित्यन्तः॥ चरतिरोचना रोचनाचरति चरति रोचनास्य॥ रोचनास्यास्यरोचना रोचनास्य प्प्राणात्॥ अस्य प्प्राणात्प्राणादस्यास्यप्प्राणादपानर्ती॥ प्राणादपानत्यपानती-प्प्राणात्प्राणादपानर्ती॥ अपानर्तीत्येप। अनती॥ व्व्यक्ख्यदक्ख्यद्धिव्व्यक्ख्यन्न्महिष॥ अक्ख्यन्न्महिषो महिषोऽक्ख्य दक्ख्यन्न्महिषो दिवम्॥ महिषो दिवन्दिवम्महिषो महिषोदिवम् दिवम् दिवमिति दिवम्॥१॥

# रेखाविकृति

मधु नक्तम्। नक्तम्मधु। मधु नक्तम्। नक्तम्। नक्तमुतोषसः। उषसऽ उत नक्तम्। नक्तमुत। उतोषस ः उषसो मधुमत्पार्थिवꣳ रजः। रज पार्थिवम्मधुमदुषसः। उषसोमधुमत्। मधुमत्पार्थिवम्। मधु मदिति मधु। मत्। पार्थिवꣳरजः। रजऽ इति रजः॥ मधु द्यौरस्तु नः पिता। पिता नोऽस्तु द्यौर्म्मधु। मधुद्यौः। द्यौरस्तु। अस्तुनः। नः पिता। पितेति पिता॥१॥

# ध्वजविकृति

व्विष्णोः कर्म्माणि। सखेति सखा। कर्म्माणि पश्यत। युज्यः सखा। पश्यत यतः। इन्द्रस्य युज्यः। यतो व्व्रतानि। पस्पशऽ इति पस्पशे। व्व्रतानि पस्पशे। व्व्रतानि पस्पशे। पस्पशऽ इति पस्पशे। यतो व्व्रतानि। इन्द्रस्य युज्यः। पुश्यत यतः। युज्यः सखा। कर्म्माणि पश्यत। सखेति सखा। व्विष्णो कर्म्माणि॥१॥

# दण्डविकृति

यजा नः। नो यज। षजा न। नो मित्रा-वरुणा। मित्रावरुण नो यज। यजानः। नो मित्रावरुणा। मित्रावरुणानोयज। यज मित्रावरुणा नो यज। यजानः। नो मित्रावरुणा। मित्रावरुणा यज। यजा देवान्। देवान्यज मित्रावरुणा नो यज। यजान। नो मित्रावरुणा। मित्रावरुणा यज। यजा देवान्। देवाँ २॥ ऽऋतम्। ऋतन्देवान्यजमित्रावरुणा नो यज। यजानः। नो मित्रावरुणा। मित्रावरुणा यज। यजा देवान्। देवाँ २॥ ऽऋतम्। ऋतम्बृहत्। बृहदृतन्देवान्यज



मित्रावरुणाः नोयज। यजानः। नो मित्रावरुणा। मित्रावरुणायज। यजा देवान्।

देवाँ २ ॥ ऽऋतम्। ऋतम्बृहत्। बृहदिति बृहत् ॥

अग्ने यक्षि। यक्ष्यग्ने। अग्ने यक्षि। यक्षि स्वम्। स्वँयक्ष्यग्ने। अग्ने यक्षि। यक्षि स्वम्। स्वन्द मम्। दमथ्ं स्वँयक्ष्यग्ने। अग्ने यक्षि। यक्षि स्वम्। स्वन्दमम्। दममिति दमम् ॥ १ ॥

## रथविकृति

व्व्रतेन दीक्षाम्। दक्षिणा श्रद्धाम्। दीक्षां व्व्रतेन। श्रद्धान्दक्षिणा। व्व्रतेन दीक्षाम्। दक्षिणा श्रद्धाम्। दीक्षामाप्नोति। श्रद्धामाप्नोति। आप्नोति दीक्षां व्व्रतेन। आप्नोति श्रद्धान्दक्षिणा। व्व्रतेन दीक्षाम्। दक्षिणाश्रद्धाम्। दीक्षामाप्नोति। श्रद्धामाप्नोति। आप्नोतिर्दीक्षया। आप्नोतिश्रद्धया। दीक्षयाप्नोतिर्दीक्षां व्व्रतेन। श्रद्धयाप्नोतिश्रद्धान्दक्षिणा। व्व्रतेन दीक्षाम्। दक्षिणा श्रद्धाम्। दीक्षामाप्नोति। श्रद्धामाप्नोति। आप्नोति दीक्षया। आप्नोति श्रद्धया। दीक्षयाप्नोति। श्रद्धया सत्यम्। आप्नोति दीक्षयाप्नोति दीक्षां व्व्रतेन। सत्यथ्ं श्रद्धयाप्नोति श्रद्धान्दक्षिणा। व्व्रतेन दीक्षाम्। दक्षिणा श्रद्धाम्। दीक्षामाप्नोति। श्रद्धामाप्नोति। आप्नोति दीक्षया। आप्नोति श्रद्धया। दीक्षयाप्नोति। श्रद्धया सत्यम्। आप्नोति दक्षिणाम्। सत्यमाप्यते। दक्षिणामाप्नोति दीक्षयाप्नोति दीक्षां व्व्रतेन। आप्यते सत्य थ्ं श्रद्धयाप्नोति श्रद्धान्दक्षिणा। व्व्रतेन दीक्षाम्। दक्षिणा श्रद्धाम्। दीक्षामाप्नोति। श्रद्धामाप्नोति। आप्नोति दीक्षया। आप्नोति श्रद्धया। दीक्षयाप्नोति। श्रद्धया सत्यम्। आप्नोति दक्षिणायाम्। सत्यमाप्यते। दक्षिणामिति दक्षिणाम्। आप्यतऽइत्याप्यते ॥ १ ॥

## घन-विकृति

सनो नः स स न÷पितेव पितेव नः स स न ÷ पितेव। नः पितेव पितेव नो नः पितेव सूनवे सूनवे पितेव नो नः पितेव सूनवे। पितेव सूनवे सूनवे पितेव पितेव सूनवेग्ने ग्ने सूनवे पितेव पितेव सूनवे ग्ने। पितेवेति पिता। इव सूनवेग्ने ग्ने सूनवे सूनवेऽग्ने सूपायनः सूपायनोग्ने सूनवे सूनवे ग्ने सूपायनः। अग्ने सूपायनः सूपायनोग्ने ग्ने सूपायनो भव भव सूपायनो ग्ने ग्ने सूपायनो भव। सूपायनो भव भव सूपायन सूपायनो भव। सूपायनऽइति सु। उपायनः। भवेति भव ॥

सचस्वानोनः सचस्व सचस्वानः स्वस्तये स्वस्तये नः सचस्व सचस्वानः स्वस्तये। नः स्वस्तये स्वस्तये नो नः स्वस्तये। स्वस्तय ऽ इति स्वस्तये ॥ १ ॥

(श्री नारायण मिश्र वेदपाठीके सौजन्यसे)

परिशिष्ट सं० ५

# दर्शपौर्णमासेष्टि

श्रीगणेशाय नमः।। अथ दर्शपौर्णामासेष्टिः संकल्पः ।।ॐ।। अद्यअमुक मासे अमुक पक्षे अमुक तिथौ अमुक वासरे गर्ग्ग गोत्रः चैनसुख शर्मा उँ तत्सत् परमेश्वर प्रीतये दशपौर्णमासाम्यामहं यक्ष्ये तत्र पौर्णमासेष्ट्याहं यक्ष्ये ।।१।।

दर्शे ।। उँ तत्सत् परमेश्वर प्रीतये दर्शेष्ट्याहं यक्ष्ये ।।२।।

।।संकल्पोद्धरणम् ।।३।।

पंच भूः संस्काराः ।।४।।

दर्भैः परिसमुह्य ।।५।।

गोमयोदके नोपलिप्य ।।६।।

वज्रेणोल्लिख्य ।।७।।

अनामिकाङ्गुष्ठाभ्यामृद्मुद्धत्य ।।८।।

उदकेनाभ्युक्ष्य ।।९।।

अग्निमुपसमाधाय ।।१०।।

आहवनीयोद्धरणम् ।।११।।

तदोदक्षिणाग्न्युद्धरणम् ।।१२।।

षट्समिधोगृहीत्वा अग्न्यन्वाधानमध्वर्युर्यजमानोवा ।।१३।।

अग्निमष्टाकपालेन पुरोडाशेन अग्निषोमावन्तराज्येनोपाँशु अग्निषोमावेकादशकपालेन पुरोडाशेन सद्योऽहं (श्वोऽहं) यक्ष्ये ।। पंच दशोवज्रः व्रीहिभिर्यागः ।।यवैर्वा ।।

ममाग्नेः पक्षः उत्तमेकालेव्रतोपायनं अन्वाहार्योदक्षिणा ये केचन वैकल्पिक पदार्थास्ते ऋत्विक् प्रयत्नेन मयावधारिताः ।।१४।।

दर्शेविशेषः अग्निमष्टाक पालेन पुरोडाशेन विष्णुं आज्येनोपाँशु ।।

इन्द्राग्नी द्वादशकपालेन पुरोडाशेनश्वोऽहं यक्ष्ये ।।उँ ।।

ममाग्नेवर्चोविहवेवस्तु वयंत्वें धानास्तन्वं पुषेम ॥ मह्यंनमंतांप्रदि शश्चतिस्रस्त्व याध्य क्षेण पृतनाजयेम ॥ आहवनीये समिधमादधाति ॥१५॥

तूष्णींद्वितीयाम् ॥१६॥

एवमितरयोरग्न्योः ॥१७॥

षडासनं ब्रह्मवरणम् ॥१८॥

ब्रह्मयजमानयोः प्रणीतापत्न्योश्च ॥१९॥

उदङ्मुखो यजमानः ॥२०॥

प्राङ्मुखं ब्रह्माणं वृणीतेबर्ह्हिमिष्टं ॥२१॥

पौर्णमासेष्ट्याहं यक्ष्ये ॥दर्शे॥ दर्शेष्टयाहं यक्ष्ये ॥तत्र भूपते भुवनपते महतोभूतस्य पतेब्रह्माणंत्वावृणीमहे ॥२२॥

वि. वृतोजपति ॥२३॥

मंत्र॥ ॐ अहंभूपति रहं भुवन पति रहं महतो भूतस्य पति भूर्भुवः स्वर्द्देवसवित रे तन्त्वावृण ते बृहस्पतिं ब्रह्माणं तद हं मनसे प्रब्रवी मित्रिनो गायत्र्यै गायत्रीत्रिष्टु भे त्रिष्टु ब्जगत्यै जगत्य नुदु भेऽनुष्टुप्प्रजापतये प्रजापति र्विश्वेभ्यो देवेभ्यो बृहस्पतिर्देवानां ब्रह्माहं मनुष्याणाम् ॥२४॥

मंत्र॥ ॐ वाचस्पतेयज्ञंगोपाय ॥२५॥

मंत्र॥ ॐ गोपायामि ॥२६॥

वि. अपरेणाहवनीयं दक्षिणातिक्राति ॥२६॥

मंत्र॥ ॐ अहेदैधिषध्योदतस्तिष्ठा न्यस्यसदनेसीदषोस्मत्पाक तरः ॥२७॥

वि. ब्रह्मसदनमीक्षते ॥२८॥

वि. ब्रह्मसदनातृणं निरस्यति ॥

मंत्र॥ ॐ निरस्तः पाप्मासहतेनयंद्विमः ॥२९॥

वि.॥ उदकोपस्पर्शः ॥३०॥

वि.॥ उपवेशनम् ॥३१॥

मन्त्र॥ ॐ इदमहंवृहस्पतेः सदसि सीदामिप्प्रसूतोदेवेन सावित्रातदग्नये प्रबर्वामितद्वा यवेतत्पृथिव्यै ॥३१॥

वि. ब्रह्मसदनआहवनीयममिमुख उपविशति ॥वाग्यतः अनुयाज प्रभवाद्धागपरिहरणादिवा ॥३२॥

वि. पश्चाद्यजमानो वेदिस्पृक् ॥

वि. गार्हपत्यमुत्तरेणोदपात्रं निधायालभते ॥३३॥

मंत्र॥ उँ भूतस्त्वाभूतकरिष्यामि ॥३४॥

मंत्र॥ ब्रह्मनन्नपः प्रणोष्यामि ॥३५॥

मंत्र॥ यजमानवाचंयच्छ ॥३६॥

मंत्र॥ उपाँशु॥ उँ प्रणययज्ञां[1] देवता वर्द्धयत्वं नाकस्य पृष्ठेयजमानोऽ अस्तु॥ सप्तऋषीणाꣳ सुकृतां यत्र लोकस्तत्रेमंयज्ञंयजमानश्चधेहि॥ उच्चैः उँ प्रणय ॥३७॥

वि. अनुज्ञातउत्तरेणाहवनीयꣳ सं प्रतिनिदधातिकस्त्वेति ॥३८॥

मंत्र॥ उँ कस्त्वायुनक्तिसत्वायुनक्तिकस्मैंत्वायुनक्तित स्मैत्वायुनक्ति ॥३९॥

वि. नान्तरेण गच्छेयुः ॥४०॥

वि. तृणैरग्नीन्परीस्तीर्य ॥४१॥

वि. इतरथावृत्तिः ॥४२॥

वि. पुरस्तात् ॥४२॥

वि. दक्षिणतः ॥४३॥

वि. पश्चात् ॥४४॥

वि. उत्तरतश्च ॥४५॥

वि. द्विशः पात्राणिसꣳ सदयतियजमानोवाश्र पणस्य पश्चादुत्तरतोवा ॥४६॥

वि. शूर्पाग्निहोत्रहवणी ॥४७॥

वि. स्फ्यः कपालानि ॥४८॥

वि. शम्या कृष्णाजिनम् ॥४९॥

वि. उलूखलमुसलम् ॥५०॥

वि. दृषदुपलम् ॥५१॥

वि. पात्रीपवित्रछेदनानी ॥५२॥

वि. पवित्रेउपवेषः ॥५३॥

वि. आज्यस्थाल्युपसर्जनीपात्रम् ॥५४॥

वि. कुशमुष्ठिरन्नावाहार्यपात्रम् ॥५५॥

---

१. इस य का उच्चारण 'ज' होगा।

वि. कुशमुष्ठयनन्तरं दोहन चतुष्टयं तच्च नियुञ्जनं १ दोहनपात्रं।२ शाखा पवित्रं।३ उखाच॥ इंदंसांनाय्ये॥

वि. वेदितृणमभ्रिः॥५६॥

वि. ज्योक्रमस्रुवः॥५७॥

सूत्रम् जुहूपभृत्॥५८॥

॥५९॥ ध्रुवासन्नहनावच्छादनानि॥

॥६०॥ परिधयोविधृत्यौ।

वि. आज्यंपुरोडाशपात्र्यौ॥६१॥

वि. होतृषदनंश्रृतावदानम्॥६२॥

वि. औषधं प्राशित्रहरणो॥६३॥

वि. अन्वाहार्यतन्दुलाः अन्तर्धानकटः॥६४॥

वि. पूर्णपात्रं समिच्च॥६५॥

वि. इध्माबर्हिश्चोपकल्पनं षडवतं च॥६६॥

वि. गार्हपत्यस्यपश्चात्स्फ्योप हित पात्र्यामौ षधकरणम्॥६७॥

वि. कर्म्मणेवामितिशूर्पाग्निहोत्र हवण्यादाय॥६८॥

मन्त्र॥ उँ कर्मणेवां वेषायवां आददे॥६८॥

वि. वाचंयच्छत्यध्वर्युः तयोरेव प्रतपनं प्रत्युष्टंनिष्टप्त मितिवा॥६९॥

मन्त्र॥ उँ प्रत्युष्टँ रक्षः प्रत्युष्टा अरातयः॥६९॥

विधि - उदकोपस्पर्शः॥

वि. गच्छत्युर्वंतरिक्षमिति॥७०॥

मन्त्र ॐ उर्वन्तरिक्षमन्वेमि॥७०॥

वि. धूरि[२] षारोहणानि पात्री विले जपति॥७१॥

मन्त्र॥ उँ धूरसिधूर्व धूर्वतं धूर्वतं योस्मान्धूर्वति तं धूर्वयं वयं धूर्वामः देवानामसिवह्नितमँ सस्नितमं पप्रितमं जुष्टतमं देवहूतमम् अह्रुतमसि हविर्द्धानं दृँ हस्वमाव्हामतियज्ञ पतिर्व्हार्षीत्॥ विष्णुस्त्वाक्रमताम्॥

वि. प्रेक्षत उरुव्वातायेतिहविष्यान्॥७२॥

मन्त्र॥ उँ उरुव्वाताय भव॥

वि. अपहतमिति निरस्यत्यन्यत्॥७३॥

मन्त्र॥ उँ उपहत ँ रक्षः उदकोपस्पर्शः॥

वि. यच्छतामित्यालभते॥७४॥

मन्त्र ॥ ॐ य च्छं तां पंच ॥

वि. देवस्यत्वेति प्रतिगृहणात्याग्नेयं चतुरोमुष्टीन् ।

मन्त्र ॥ ॐ देवस्यत्वा सवितुः प्रसवेश्विनोर्बाहुभ्यांपूष्णो हस्ताभ्यां अग्नयेजुष्टं - गृहणामि प्रथमः ॐ देवस्यत्वासवितुः प्रसवेश्विनोर्बाहुम्यां पू ष्णो-हस्ताम्यां अग्नये जुष्टंगृहणामि द्वितीयः ॥

ॐ देवस्यत्वासवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां अग्नयेणुठतं गृह्णामि तृतीयः ॥

तूर्ष्णीं चतुर्थम् ॥

वि. एवमग्नीषोमीयम् ॥७६ ॥

मन्त्र ॥ ॐ देवस्यत्वासवितुः प्रसवेश्विनोर्ब्राहुभ्यां पूष्णोहस्ताभ्यां अग्निषोमाभ्यां जुष्टं ग्रह्णामि प्रथमः ।

मन्त्र । ॐ देवस्यत्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां अग्निषोमाभ्यां जुष्टं गृह्णामि द्वितीयः ।

मन्त्र । ॐ देवस्यत्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णोहस्ताभ्यां अग्निषोमाभ्यांजुष्टं गृह्णामि तृतीयः ॥

तूर्ष्णीं चतुर्थं ॥

यथादैवतमन्यत् ॥

वि. भूतायत्वेति शेषाभिमर्शनम् ॥७७ ॥

मन्त्र ॐ भूतायत्वा नारातये परिशेषयामि ॥

वि. स्वरिति प्राङीक्षते ॥७८ ॥

मन्त्र ॐ स्वरभि विख्येषम् ॥७८ ॥

वि. दृँ हन्तामित्युत्थानम् ॥७९ ॥

मन्त्र ॐ दृँ हंतां दुर्याः पृथिव्याम् ॥७९ ॥

वि. पृथिव्यांगच्छत्युर्वंतरिक्षमिति ॥८० ॥

मन्त्र ॐ उर्वन्तरिक्षमन्वेमि ॥८० ॥

वि. श्रपणस्य पश्चात्सादयति पृथिव्यास्त्वेति ॥८१ ॥

मन्त्र ॐ पृथिव्यास्त्वा नाभौसादयाम्यदित्या उपस्थेग्नेहव्यँ रक्षः ॥८१ ॥

वि. पवित्रकरणं कुशौसभाव प्रसीर्णाग्रावनन्तर्गर्भौकुशै स्छिनत्ति पवित्रेस्थ इति त्रीन्वा ॥८२ ॥

मन्त्र ॐ पवित्रेस्थोवैष्णव्यौ ॥८२ ॥

वि. हविर्ग्रहण्यामपः कृत्वाताभ्यामुत्पुनातिसवितुरिति ॥८३ ॥

मंत्र ॐ सवितुर्व प्रसव उत्पुनाम्यच्छिद्रेणपवित्रेणसूर्यस्यरश्मिभिः ॥८३ ॥

वि. तास्थानंतयोः सव्येकृत्वादक्षिणेनोद्दिंगयति देवीराप इति ॥८४ ॥

मन्त्र ॐ देवीरापो अग्रे गुवो अग्रे पुवोग्रऽइमम द्यज्ञं नयताग्रे यज्ञपति ँ सुधातुं यज्ञपतिं देव युवं युष्माइन्द्रोवृणीतवृत्रतूर्ये यूयमिन्द्र मवृणीध्वंवृत्रतूर्ये ॥८४ ॥

वि. प्रोक्षितास्थेतिता संप्रोक्षणम् ॥८५ ॥

मन्त्र ॐ प्रोक्षितास्थ ॥८५ ॥

वि. हविश्चाग्नयेत्वाग्नीषोमाभ्यांत्वेति ॥८६ ॥

प्रैष ब्रह्मन्हवि ँ प्रोक्षिष्यामि ॥

मन्त्र ॐ प्रोक्षयज्ञं देवतावर्द्धयंत्वं नाकस्य पृष्ठेयज मानो अस्तु सप्तऋर्षीणा ँ सुकृतांयत्र लोक स्तत्रेमं यज्ञं यजमानं च धेहि ॐ प्रोक्ष ॥८६ ॥

मं ॐ अग्नये त्वा जुष्टं प्रोक्षामि ॥

ॐ अग्निषोमाभ्यां त्वा जुष्टं प्रोक्षामि ॥

वि. पात्राणिदैव्यायेति ॥८७ ॥

मन्त्र ॐ दैव्यायकर्मणेशुन्धध्वं देवयजायैयद्वोशुद्धाः पराज घ्नुरिदंवस्तच्छुंधामि ॥८७ ॥

वि. आदौवज्रप्रोक्षणं ॥तंगृहीत्वा ॥

सू. कृष्णाजिनम् ॥ उलूखलम् ॥ मुसलम् ॥ शम्याम् ॥ दृषदम् ॥ उपलम् ॥ शूर्पम् ॥ पात्रीम् ॥ उपवेषम् ॥ कपालानि ॥ आज्यस्थालीम् ॥ उपसर्ज्जनीपात्रम् ॥ कुशमुष्टिम् ॥ ष्ट ॥ अन्वाहार्य पात्रम् ॥ वेदितृणम् ॥ अभ्रिम् ॥ योक्त्रम् ॥ स्रुवम् ॥ जुहूम् ॥ उपभृतम् ॥ ध्रुवाम् ॥ सन्नहनावच्छादनानि ॥ परिधीन् ॥ विधृत्यो ॥ आज्यम् ॥ पुरोडाशपात्र्यौ ॥ होतृषदनम् ॥ श्रृतावदानम् ॥ औषधम् ॥ प्राशित्रहरणे ॥

॥अन्वाहार्यतण्डुलान् ॥ अन्तर्धान कटम् ॥ पूर्णपात्रम् ॥ समिधम् ॥ यथासादित पात्राणां प्रोक्षणम् ॥

वि. असञ्चरे प्रोक्षणीर्निधाय ॥

वि. शमार्सीति कृष्णाजिनादानम् ॥८८ ॥

मन्त्र ॐ शर्मासि ॥८८ ॥

| | |
|---|---|
| वि. | अपेत्यपात्रेभ्योऽव धूनोत्त्यवधूतमिति ॥८९॥ |
| मन्त्र | ऊँ अवधूत ँ रक्षोऽव धूताअरातयः॥ उदकोपस्पर्शः॥८९॥ |
| वि. | प्रत्यग्ग्रीवमास्तृणात्यदिव्यास्त्वगिति ॥९०॥ |
| मन्त्र | ऊँ अदिव्यास्त्वगसि प्रतित्वादितिर्वेतु ॥९०॥ |
| वि. | सव्याशून्ये निदधात्युलूखल मद्रिरसिग्रावासीतिवा ॥९१॥ |
| मन्त्र | ऊँ अद्रिरसिव्वानस्पत्यः प्रतित्वादित्यास्त्वग्वेतु ॥ |
| वि. | हविरावपत्यग्नेस्तनुरिति ॥९२॥ |
| मन्त्र | ऊँ अग्नेस्तनूरसिव्वाचो विसर्जनं देववीतये त्वागृह्णामि ॥ वाग्विसर्गः॥ विष्णवे नमः॥ हविष्कृतावा नानार्वाजेष्वं ते सामर्थ्यात् ॥९२॥ |
| वि. | वृहद्ग्रावेति मुसलमादते ॥९३॥ |
| मन्त्र | ऊँ वृहद्ग्रावासिवानस्पत्यः॥९३॥ |
| वि. | सऽइदमित्यवदधाति ॥९५॥ |
| मन्त्र | ऊँ सऽइदं देवेभ्यो हविः शर्मीष्व सुशमीशमीव्व ॥ |
| वि. | हविष्कृदेहीति त्रिराहूयति ॥९६॥ |
| मन्त्र | ऊँ हविष्कृदेहि हविष्कृदेहि हविष्कृदेहि ॥९६॥ |
| वि. | अतःपद्व्यवहंत्यद्न्योवाहूयत्याहं त्यन्यो दृष दुपले कुक्कुटोसीति त्रिः शम्ययाद्धिर्दृषद ँ सकृदुपलाम् ॥९७॥ |
| मन्त्र | ऊँ कुक्कुटोसि मधु जिह्वऽइषमूर्जमावदत्वयावय ँ संघात ँ सघातंजेष्म ॥९७॥ |
| वि. | अग्नीध्रस्तूर्ष्णीकण्डनम् ॥९८॥ |
| वि. | वर्षवृद्धमसीतिशूर्पमादते ॥९९॥ |
| मन्त्र | ऊँ वर्षवृद्धमसि ॥९९॥ |
| वि. | प्रतित्वेतिह विरुद्धपति ॥१००॥ |
| मन्त्र | ऊँ प्रतित्वावर्षवृद्धंवेतु ॥१००॥ |
| वि. | परापूतमितिनिष्पुनाति ॥१०१॥ |
| मन्त्र | ऊँ परापूत ँ रक्षः परापूता अरातयः उदकोपस्पर्श ॥ |
| वि. | वायुर्वइति विविनक्ति ॥१०२॥ |
| मन्त्र | ऊँ वायुर्वोविविनक्तु ॥ तुषसमर्पणमध्वर्यवे ॥१०२॥ |
| वि. | अध्वर्युस्तुषां निरस्यत्यपहतमिति ॥१०३॥ |

मन्त्र उँ अपहृत ँ रक्षः॥ उदकोपस्पर्शः॥१०४॥

वि. देवोव इति पात्र्यामोप्याभिमंत्रयते॥१०५॥

मन्त्र उँ देवोवः सविताह्रिरण्यपाणिः प्रति गृभणत्वच्छिद्रेण पाणिना॥१०५॥

वि. त्रिः फलीकरोति॥ कंडनम्॥ शूर्पादानम्॥ हविरुद्वपनम् निष्पवनम् निष्पमम्॥

उदकोपस्पर्शः॥ विवेकीकरणम्। कणनिधानं॥ पुनः कण्डनम्॥ शूर्पादानम्॥ हविरुद्वपनम्॥ निष्पवनम्॥ उदकोपस्पर्शः॥ विवेकीकरणम्॥ कणनिधानम्॥ पुनः कंडनम्॥ शूर्पादानं॥ हविरुद्वापनं॥ निष्पवनं॥ उदकोपस्पर्शः॥ विवेकीकरणम्॥ कणनिधानम्॥ फलीकृत्यकणान्निदधाति॥

वि. पेशणोपधानेयुगपत्॥ पेषणमध्वर्युरुपधानमग्नीत्॥

वि. धृष्टिरसीत्युपवेषमादाय॥

मन्त्र उँ धृष्टिरसि॥

वि. आपाग्र इत्यं गारान्प्राचः करोति॥

मन्त्र उँ अपाग्रे अग्नि मामादंजहि निष्क्रव्याद ँ सेध

वि. आदेव यजमित्यं गारमाधृत्य॥

मन्त्र उँ आदेव यजँवह॥

वि. कपालेनावच्छादयति ध्रुवमसीति॥

मन्त्र उँ ध्रुवमसिपृथिवीन्दृ ँ हब्रह्मवनित्वाक्षत्रवनित्वा क्षत्रवनिसजात-वन्युपद धामिभ्रातृव्य स्यवधाय॥

वि. संव्यांगुल्याशूयें गारंनिदधात्यग्रेब्रह्मेति॥

मन्त्र ॐ अग्रे ब्रह्म गृम्गीष्व॥

वि. धरुणमिति पश्चात्॥

मन्त्र ॐ धरुणमस्यन्तरिक्ष+न्दृ ँ ह ब्रह्मवनित्वाक्षत्रवनित्वाक्षत्रवनि-सजातवन्युपदधामि भ्रार्तृव्यस्य वधाय॥

वि. सव्यांगुल्याशून्ये निदधात्यग्रे ब्रह्मेति॥

पुरस्ताद्धर्त्रमिति॥

मन्त्र उँ धर्त्रमसिदिवंदृ ँ हब्रह्मवनित्वाक्षत्रवनिस जातवन्युपदधामि-भ्रातृव्यस्यवधाय॥

वि. संव्यांगुल्या शून्येनिदधात्यग्रेब्रह्मेति॥
वि: विश्वाभ्य इति दक्षिणतः॥
मन्त्र ॐ विश्वाभ्यस्त्वासाम्य उपदधामि॥
वि. समंविभज्यद्वेदक्षिणतः॥ एवमुत्तरतश्च॥ चितस्थेति॥
मन्त्र ॐ चितस्थोर्द्ध्वंचितः॥
वि. संव्यागुल्याशून्येगारं निदधात्यग्रेब्रह्मेति॥
मन्त्र अग्नेब्रह्मगृभ्गीष्व॥
वि. एवमेकादशाग्नीषोमीयस्य॥ अधिकंदक्षिणतः॥
वि. भृगूणामित्यं गारैरम्पूहति॥
मन्त्र ॐ भृगूणामं गिरसान्तपसातप्यध्वम्॥
वि. उपसर्जनीरधिश्रयति॥
वि. शर्मासीतिकृष्णाजिनादानं॥
मन्त्र ॐ शर्मासि॥
वि. अपेत्यपात्रेभ्योऽवधूनोत्यव धूतमिति॥
मन्त्र ॐ अवधूत ँ रक्षोऽवधूता अरातयः॥ उदकोप स्पर्शः॥
वि. प्रत्यग्रीवमास्तृणात्यदित्यास्त्वगिति॥
मन्त्र ॐ अदित्यास्त्वगसि प्रतित्वा दितिर्वेतु॥
वि. सव्याशून्येत स्मिन्दृषदं धिषणासीति॥
मन्त्र ॐ धिषणासिपर्वती प्रतित्वा दित्यास्त्वग्वेतु॥
वि. पश्चाच्छम्यामुपोहत्युदी चींदिव इति॥
मन्त्र ॐ दिवस्कं मनीरसि॥
वि. दृषद्युपलां धिषणासीति॥
मन्त्र ॐ धिषणासिपार्वतियी प्रतित्वापर्वतीव्वेतु॥
वि. धान्यमसीतितण्डुलानोप्य॥
मन्त्र ॐ धान्यमसि धिनुहिदेवान्॥
वि. पिनष्टि प्राणायत्वेतिप्रतिमंत्रम्॥
मन्त्र ॐ प्राणायत्वा पिनष्मि ॐ उदानायत्वापिनष्मि॥
वि. अर्द्धपिष्टे ब्रह्मणाज्यनिर्वापः॥ पिष्यमाणेषु निर्वपत्यन्यो महीना मित्याज्यम्॥
मन्त्र ॐ महीनांपयोऽसि॥

वि. वेदोऽसीतियजमानो वेदं करोति॥

मन्त्र ॐ वेदोसियेनत्वं देव वेद देवेभ्यो वेदो भव स्तेन मत्यं वेदोभूयाः॥ ॐ व्यानायत्वा पिनष्मि॥

वि. दीर्घामिति कृष्णाजिने प्रोहति॥

मन्त्र ॐ दीर्घामनु प्रसिति मायुषे धान्देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णत्वच्छिद्रेण पाणिना॥

वि. चक्षुषेत्वेतीक्षते॥

मन्त्र ॐ चक्षुषेत्वा ईक्षे॥

वि. पात्र्या ँ सपवित्रायां पिष्टान्या वपति॥ देवस्य वेति॥

मन्त्र ॐ देवस्यत्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णोहस्ताभ्यां संवपामि॥

वि. श्रपणस्य पश्चा दुपविशत्यं तर्वेदिवा॥

वि. उपसर्जनीरानयत्यन्यः पवित्राभ्यां प्रति गृह्णाति स-माप इति॥

मन्त्र ॐ समाप ओषधीभिः समोष धयोरसेनस ँ रेवतीर्जगतीभिः पृच्यन्ता ँ संगधुमतीर्मधुमतीभिः पृच्यन्ताम्॥

वि. संयौतिजनयत्यैत्वेति॥

मन्त्र जनयत्यैत्वा सं यौमि॥ संयवनम् पिण्डवंधनं अवदान करणंनिर्देशः॥

वि. समंविभज्यास ँ हविष्यन्नालभत॥ इदमग्नेरिदमग्नीषोमयोरिति॥

मन्त्र ॐ इदमग्नेः इदमग्नीषोमयोः॥

वि. इषेत्वेत्याज्यमधिश्रयत्यन्यः॥

मन्त्र ॐ इषेत्वा अधिश्रयामि॥

वि. घर्मोऽसीति पुरोडाशं युगपत्॥

मन्त्र ॐ घर्मोऽसिविश्वायुः॥

वि. उरुप्रथाइति प्रथयतियावत्क पालमनतिपृथुम्॥

मन्त्र ॐ उरुप्रथा उरुप्रथस्वोरुते यज्ञपतिः प्रथताम्॥

वि. अग्निष्ट इत्याद्भिर भिमृशति सकृत्त्रिर्वा॥

मन्त्र अग्निष्टेत्वचं माहि ँ सीत॥

वि. पिष्टलेपापनयनम्॥ पात्र्यं गुलिप्रक्षालम॥

वि. पर्यग्निकरोत्यन्तरित ँ रक्षोऽन्तरिता अरातय इति सह्वाज्यम्॥

मन्त्र ॐ अन्तरित ँ रक्षोन्तरिता अरातयः॥ इतरथावृत्तिः उदकोपस्पर्शः॥

वि. देवसत्वेति श्रपणं॥

मन्त्र उँ देवस्त्वासविता श्रपयतुव्वर्षिष्टिधिनाके॥

वि. नाभेरित्यालभते॥

मन्त्र उँ नाभेर्मासंविक्थाः॥

वि. अतमेरुरितिशृतावमिवास यति भस्मनावेदेनोपवेषेणवा॥

मन्त्र उँ अतमेरुर्यज्ञोतमेरुर्यजमानस्य प्रजाभूयात्॥

वि. पात्रीमभितप्य॥ आतपेभ्योनिनयति प्रत्यगस्ँ स्यंदमानं त्रितायत्वेति प्रतिमंत्रं॥ प्राचंखननं प्रयं चं निनयनम्॥

मन्त्र उँ त्रितायत्वानिनयामि इदंत्रिताय न मम॥ उँ द्वितायत्वानिनयामि इदं द्विताय न मम्॥ उँ एकतायत्वा निनयामि इदं एकता य न मम॥

वि. अन्वाहार्यदक्षिणाग्रावधिश्रयति॥

वि. अत्रवाव्र तोपायनं॥

वि. अपरेणाहवर्नीयं वेदिं खनति॥ त्र्यंगुलखातां व्याम मात्रीं ※ पश्चात् वेदिमानं॥ प्रथमः द्वितीयः तृतीयः चतुर्थः॥

त्र्यरत्निप्राचीं॥ प्रथमः द्वितीयः तृतीयः॥

त्रयः पुरस्तात्॥ प्रथमः द्वितीयः तृतीयः॥

मध्यसंगृह्रीतां॥ मध्यसंगृहीता॥ श्रोणींच श्रोणीच अग्निमभितोर्थ्ँसौ२॥

वेदिंपरिसमुह्याग्नीध्रः॥

वितृतीयेंग्रीद्रुत्त्रत उत्करंकरोति॥ उत्करकरणम्॥

वि. देवस्यत्वेतिस्फ्य मादायसतृणम्॥

मन्त्र उँ देवस्यत्वासवितुः प्रसवेश्विनोर्वाहुभ्यां पूष्णोहस्ताभ्यां आददेध्वरकृतं देवेभ्यः॥

वि. सव्येकृत्वा दक्षिणेनालभ्य जपतीन्द्रस्यबाहुरिति॥

मन्त्र उँ इंद्रस्यबाहुरसि दक्षिणः सहस्रमृष्टिः शततेजाव्वायुरसितिग्मजा तेजाद्विषतोव्वधः॥

वि. वेद्यांतृणं निदधात्युदक् पृथिव्यैंवर्मासीति॥

मन्त्र उँ पृथिव्यैंवर्मासि॥

वि. पृथिर्वा देवयजनीतितृणेऽन्तर्हिते प्रहरति।

मन्त्र ॐ पृथिर्वा देवयजन्योषध्यास्ते मूलंमाहिर्ंसिषम्॥

वि. व्रजंगच्छेतिपुरीषमादते॥

मन्त्र ॐ व्रजंगच्छेगोष्ठानम्॥

वि. वर्षतुत इतिवेदिं प्रेक्षते॥

मन्त्र ॐ वर्षतुतेद्यौः॥

वि. वधानेत्युत्करे करोति॥

मन्त्र ॐ वधान देव सवितः परमस्यां पृथिव्याᳫं शतेनपाशैर्योस्मान्द्वेष्टियं च वयं द्विष्मस्तमतोमामौक्॥

वि. अपाररुमितिद्वितीयं प्रहरणादि॥

मन्त्र ॐ अपाररुं पृथिव्यैदेव यजनाद्वध्यासम्॥ उदकोपस्पर्शः॥

वि. व्रजंगच्छेति पुरीषमादत्ते॥

मन्त्र ॐ व्रजंगच्छगोष्ठानम्॥

वि. वर्षतुत इतिवेदिं प्रेक्षते॥

मन्त्र ॐ वर्षतुतेद्यौः॥

वि. वधानेत्युत्करेकरोति॥

मन्त्र ॐ वधानदेव सवितः परमस्याँपृथिव्याᳫं शतेन पाशैर्योमान्द्वे ष्टि यं च वयं द्विष्मस्तमतोमामौक्॥

वि. अभिन्यस्यत्यग्नीदुत्करमररोदिवमिति॥ उदकोपस्पर्शः॥

मन्त्र ॐ अररोदिवमापप्तः॥ उदकोपस्पर्शः

वि. द्रप्सस्तइतितृतीयं प्रहरणादि॥

मन्त्र ॐ दूप्सस्वे द्याम्मास्कन्॥

वि. व्रजंगच्छेति पुरीषमादत्ते॥

मन्त्र ॐ व्रजंगच्छ गोष्ठानम्॥

वि. वर्षतुत इतिवेदिं प्रेक्षते॥

मन्त्र ॐ वर्षतुतेद्यौः॥

वि. वधानेत्युक्करेकरोति॥

मन्त्र ॐ वधानदेवसवितः परमस्यां पृथिव्याᳫं शतेन पाशैर्योस्मान्द्वेष्टियं च वयंद्विष्मस्तमतोमामौक्॥

वि. तूष्णींचतुर्थ ँ सतृणंप्रहरणं॥ पुरीषादानं वेदिप्रेक्षणम्॥ उत्करेकरणम्॥

वि. ब्रह्मन्पूर्वं परिग्रहं परिगृहीष्यामि॥

मन्त्र ॐ बृहस्पते परिगृहाण वेदि ँ सुगावोदेवाः सदनानिसंत्वस्यां बर्हिः

प्रथता ँ साध्वंतर्हि ँ स्रापृथिर्वादेवी देव्यस्तु देवतावर्द्धयत्वं नाकस्यपृष्ठो यजमानोअस्तु सप्तऋर्षीणा ँ सुकृतायत्रलोकस्तत्रेमंयज्ञं यजमानं च धेहि॥ उँ परिगृह्वाण॥

वि. दक्षिणतः पश्चादुतरत श्चस्फ्येन गायत्रेणेति प्रति।

मन्त्र ॐ गायत्रेण त्वाछंदसा परिगृहणामि।

मन्त्र ॐ त्रैष्टुभेनत्वाछंदसा परिगृहणामि।

मन्त्र ॐ जागतेनत्वाछन्दसा परिगृहणामि।

वि. वेद्या त्रिरुल्लिखय॥ आहहरत्रिः॥

धृत्वाग्रील्लेखाः संमृशति।

अत्र वेदिकरणं यथोक्तं॥ तूष्णीमभ्र्याखनने॥

वि. उत्तरं परिग्रहं परिगृह्णाति॥ ब्रह्मन्नुत्तरं परिगृहं परिगृर्हीष्यामि॥

मन्त्र ब्रह्मा॥ उँ बृहस्पते परिगृह्वाण वेदि ँ सुगावो देवाः सदनानि संत्वस्यां बर्हिः प्रथता ँ साध्वं तर्हि ँ स्रापृथिर्वी देवी देव्यस्तु देवता वर्द्धयत्वे नाकस्य पृष्ठेयजमानो अस्तु सप्तऋर्षीणां ँ सुकृतांयत्र लोकस्तत्रेमंयज्ञं यजमानं च धेहि॥ उच्चैः उँ परिगृह्वाण॥

वि. सुक्ष्मास्योनोर्जस्वती ति प्रतिमंत्रं पूर्ववत्॥

मन्त्र उँ सुक्ष्माचासिशिवाचासि॥

मन्त्र ॐ स्योनाचासि सुषदाचासि।

मन्त्र ऊर्जस्वती चासि पयस्वती च॥

वि. पुरक्रूरस्येत्यनुमार्ष्टि॥

मन्त्र उँ पुराक्रूरस्य विस्टपोविरप्शिन्नुदादाय पृथिवींजीवदानुभूयामैरयंश्चन्द्र मसिस्वधाभिस्तामुर्धीरासो अनुदिश्ययजन्ते॥

वि. अध्यधिवेदिं प्रोक्षणीर्धारयति॥

वि. अन्योयस्फ्य मुद्यम्याह॥

मन्त्र प्रोक्षणीरा सादये ध्मंब्र र्हिं रुपसादयस्रुचः संमृड्ढित्नीश्रं सन्न त्याज्येनोदेहिं॥

वि. वेद्यांप्रोक्षर्णानिर्दधाति॥ द्विषतोवधइतिस्फ्य मुदं चं प्रहरति॥

मन्त्र द्विषतोवधोसि॥

वि. अवंनिज्यपाणी अपरेणप्रणीता स्फ्यं निदधाति॥ इध्मावर्हिश्च पूर्वमिध्मं प्रणीता दक्षिणेनवाहृत्य वेदाग्रेनिष्पत्तिः स्रुवादीनां पात्राणां

सं मार्गः ॥ स्रुवं प्रतप्य पूर्ववत् ॥

मन्त्र प्रत्युष्ट्ँ रक्षः प्रत्युष्टा अरातयः ॥ उदकोपस्पर्शः ॥

वि. वेदाग्रैंरंतरतः प्राक्संमार्ष्टच निशित इति ॥

मन्त्र अनिशितोसिसपत्नक्षि द्वा जिनंत्वा वाजेध्यायैं संमार्ज्मि ॥

वि. विजर्यस्यबर्हिर्मूलैः अनिशितोसीति ॥

मन्त्र उँ अनिशितोसिसपत्नक्षिद्वाजिनं त्वावाजेध्यायैंसंमार्ज्मि ॥

मन्त्र प्रत्युष्टऽरक्षः प्रत्युष्टाऽअरातयः उदकोपस्पर्शः ॥

वि. प्राङुत्क्रम्यप्रतप्य प्रतप्यप्रयच्छति ॥ स्रुक् संमार्गः ॥ अनिशितेतिस्रुचः ॥

मन्त्र उँ अनिशितासि सपत्नक्षिद्वाजिर्नीत्वा वाजेध्यायैसंमार्ज्मि ॥

मन्त्र उँ अनिशिता सि सपत्नक्षिद्वाजिनंत्वा वाजेध्यायै संमार्ज्मि ॥

मन्त्र उँ प्रत्युष्टथ्ँ रक्षः प्रत्युष्टा अरातयः ॥ उदकोपस्पर्शः ॥

वि. प्रतप्य प्रतप्य प्रयच्छति ॥ एवमुपभृत् ॥ ध्रुवाच ॥

वि. तूष्णीं प्राशित्रहरणं ॥ शृतावदानं ॥ पुरोडाश पात्र्यौ ॥ इ डा पात्रीं च ॥ संर्माजनान्य पास्यत्त्याहवनीयेप्राशनमके ॥

वि. पर्त्नी ँ संनत्यतिप्रत्यग्दक्षिणात उपविष्टां गार्हपत्यस्य मुंजयोक्त्रेण त्रिवृतापरिहरत्य धिवासोदित्यैरास्नेति ॥

मन्त्र उँ अदित्यैंरास्नासि ॥

वि. दक्षिणंपाशमुत्तरे प्रतिमुच्योर्ध्वमुद्गूहतिविष्णोर्वेष्य इति ॥

मन्त्र उँ विष्णोर्वेष्योसि ॥

वि. नग्रथिंकरोति ॥ ऊर्ज्जेत्वेत्याज्यमुद्वास्य ॥

मन्त्र उँ ऊर्ज्जेत्वामुद्वासयामि ॥

वि. पत्न्याज्यमवेक्षस्व ॥ पत्नीमवेक्ष्ययत्यदब्धेनेति ॥

मन्त्र उँ अदब्धेनत्वाचक्षुषा व पश्यामि अग्रे र्जिह्वासिसु हूर्देवेभ्योधाम्नेधाम्ने मेभवयजुषे यजुषे ॥

वि. वेद्यांकरोत्य परं प्रोक्षणीभ्यः सवितुस्त्वे त्याज्यमुत्पुनाति वेदोपग्रहेण ॥

मन्त्र उँ सवितुस्त्वा प्रसव उत्पुनाम्यच्छिद्रेणपवित्रेण सूर्यस्यरश्मिभिः

वि. प्रोक्षर्णाश्च पूर्ववत् वज्रोपग्रहेण ॥

मन्त्र ॐ सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ॥

वि. आज्यमवंक्षतंतंतेजोर्स्मातियज मानोवा॥

मन्त्र उँ तेजोसिशुक्र मस्य मृतमसि॥

वि. स्रुवेणाज्य ग्रहणं चतुर्जुह्वां धामनामेति सकृन्मंत्रः॥

मन्त्र उँ धामनामासि प्रियंदेवानामनाधृष्टं देवयजनमसि प्रथमः द्वितीयः तृतीयः चतुर्थः॥

मन्त्र ॐ धामनामासि प्रियं देवानामनाधृष्टं देवयजनमसि
प्रथमः द्वितीयः तृतीयः चतुर्थः पंचमः षष्ठः सप्तमः अष्टमः॥

वि. अष्टाउपभृत्यल्पीयोनुया जाश्चेत्॥

वि. ध्रुवायांचजुहूवत्॥

मन्त्र उँ धामनामासि प्रियंदेवानामनाधृधृष्ट देवयजनमसि प्रथमः द्वितीयः तृतीयः चतुर्थः स्थाल्यपसरणम्॥

वि. इ॒मंप्रोक्षतिविस्रर्ठ्ठं स्यकृष्णोर्सीति प्रतिमंत्रम। ब्रह्मन इ॒मंप्रोक्षामि॥

मन्त्र उँ प्रोक्षयज्ञं देवतावर्द्ध यत्वंनाकस्यपृष्ठे यजमानो अस्तु सप्तऋर्षाणा र्ठ्ठं सुकृतांयत्र लोकस्तत्रेमं यजमानं च धेहि उँ प्रोक्ष॥

मन्त्र उँ कृष्णोस्यारवरेष्ठोग्नयेत्वाजुष्टं प्रोक्षामि॥ वेदिंच।

मन्त्र उँ वेदिरसिवर्हिषित्वाजुष्टां प्रोक्षामि॥

वि. बर्हिः प्रतिगृत्धार्ग्राधात्॥ वेद्यांकृत्वा पुरस्ताद्ग्रंथिम्॥
बृह्मन् बर्हिः प्रोक्षिष्यामि॥

मन्त्र उँ प्रोक्षयज्ञं देवतावर्द्धयत्वं नाकस्य पृष्ठे यजमानोअस्तुसप्तऋर्षाणार्ठ्ठं सुकृतांयत्र लोकस्तत्रेमंयज्ञं यजमानं च धेहि उँ प्रोक्ष॥

मन्त्र उँ बर्हिरसिस्रुग्भ्यस्त्वाजुष्टं प्रोक्षामि॥

वि. शेषंमूलेषूपसिंचत्यदित्यैव्युन्दनमिति॥

मन्त्र उँ अदित्यैव्युन्दनमसि॥

वि. पवित्रे निधाय प्रणीता सुबर्हिर्विस्रर्ठ्ठं स्य पुरस्तात्प्रस्तरग्रहणं विष्णोरिति॥

मन्त्र उँ विष्णोस्तुपोसि॥

वि. तूर्ष्णींब्रह्मणेप्रदाय॥ संनहनंविस्रर्ठ्ठं स्यदक्षिणस्यांवेदिश्रोणौनिधाय अन्यैरवच्छाद्य॥ आपनर्ठ्ठं स्तृंनिरस्येत्।

वि. बर्हिषस्त्रेधाकरणम॥ वेदिं स्तृ णात्यूर्णमृदसमिति॥

मन्त्र उँ ऊरुणम्रदसन्त्वास्तृणामिस्वासस्थां देवेभ्यः॥

मन्त्र ॐ ऊर्णंम्रदसन्त्वास्तृणामिस्वासस्थां देवेभ्यः।।

वि. इध्ममात्समि धमादाय ब्रह्मणः प्रस्तरंचादाय।। आहवनीयं कल्पयति।। उपर्युपरिप्रस्तरं धारयन् उल्मूके उद्ह हत्यनुयाजाश्चेत्।। परिधीन्परिदधात्या द्र्नेकवृक्षीयान् बाहुमात्रान् पालाशवैकंकतकार्ष्मर्यवैल्वान्यूर्वालाभेपूर्वा लाभ उत्तरान् खादिरौदुंबरान्वामध्यमदक्षिणोत्तरान्।।

वि. गंधर्व इतिप्रतिमंत्रम्।।

मन्त्र ॐ गंधर्वस्त्वाविश्वावसुः परिदधातु विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिडऽईडितः।।

मन्त्र ॐ इन्द्रस्य बाहुरसि दक्षिणो विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्नि रिडऽईडितः।।

मन्त्र मित्रावरुणौत्वौत्तरतः परिधत्तां ध्रुवेण धर्मणा विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिऽऽईडितः।।

वि. प्रथमं परिधिशृं समिधोपस्पृश्यर्वीतिहोत्य मित्यादधाति।।

मन्त्र ॐ वीं.तेहोत्रं त्वाक वेद्युमंतशृं समिधीमहि अग्नेवृहन्तमध्वरे।।

वि. अनुपस्पृश्य द्वितीयाशृं समिदर्सीति।।

मन्त्र ॐ समिदसि।।

वि. सूर्यस्त्वेतिजपत्याहवनीय मीक्षमाणस्तद्व चनत्वात्।।

मन्त्र ॐ सूर्यस्त्वा पुरस्तात्पातुकस्याश्चिदभिशस्त्यै।।

वि. आवृत्यवेदिं।। बर्हिषस्तृणे तिरश्चीनिदधातिसवि तुरिति।।

मन्त्र ॐ सवितुर्बाहुस्थः।।

वि. तयोः प्रस्तरशृं स्तृणाति ऊर्णंम्रदसमिति।।

मन्त्र ॐ ऊर्णंमद्रसंत्वास्तृणामि स्वासस्थं देवेभ्यः।।

वि. अभिनिदधात्यात्वा व सव इति।।

मन्त्र ॐ आत्वाव सवोरुद्रा आदित्याः सदन्तु।।

वि. सव्याशून्ये जुहूं प्रतिगृत्यनिद धांतिधृताचीति प्रस्तरे।।

मन्त्र ॐ घृताच्यसिजुहूर्नाम्नासिदं प्रियोग धाम्ना प्रिय शृंसद आसद।।

वि. इतरां वेदोपग्रहेण।। वर्हिष्युपभृतम्।।

मन्त्र ॐ घृताच्यस्युपभृन्नाम्नासेदं प्रियेणधाम्नाप्रियं शृं सद आसीद।।

वि. ध्रुवांचाव क्रमेणपूर्वम्।।

मन्त्र उँ धृताच्यसिध्रुवा। नाम्नासेदं प्रियेणधामन्ना प्रियं थ्ं सद आसीद्॥

वि. स्थाल्यपसरणम्॥ पुरोडाशयोर्विभस्मीकरणम्॥ पुरोडाश पात्र्योः स्थापनम्॥ पुरोडाशपात्र्योरूपस्तारः तत्रस्यामिधारः॥

वि. उद्वासनं॥ श्रृतानांतु पूर्वेण॥ उद्वासितानांतुपृष्ठतः॥ कपालसंख्या प्राणदानं॥

मन्त्र प्रथमम्॥ द्वितीयम्॥ तृतीयम्॥ चतुर्थम्॥ पंचमम्॥ षष्ठम्॥ सप्तमम्॥ अष्टमम्॥ नवमम्॥ दशमम्॥ एकादशम्॥ दर्शेद्वादशम्॥

वि. प्राणदानम्॥

मन्त्र उँ यस्तेप्राणः पशूषुप्रविष्टो देवानां विष्टा मनुयोवि तस्थे आत्मन्नवां सोमघृतवान्हि भूत्वाग्नींषोमौगच्छ स्वर्यजमा नायविन्द॥

वि. उँ प्रत्यनक्तिकपालानि॥ यानि धर्मेकपालान्यु पचिन्नवंतिवेधसः॥ पूष्णास्तान्य पिव्रत इन्द्रवायू विमुंचताम्॥ तूर्ष्णींवा॥

मन्त्र प्रथममनज्मी द्वितीयमनज्मी तृतीय मनज्मी चतुर्थमनज्मी पंचममनज्मी षष्ठमनज्मी सप्तम मनज्मी अष्टमनज्मी॥

मन्त्र प्रथम मनज्मि द्वितीय मनज्मि तृतीय मनज्मि चतुर्थ मनज्मि पंचम मनज्मि षष्ठ मनज्मि सप्तम मनज्मि अष्टम मनज्मि नवम मनज्मि दशम मनज्मि एकादश मनज्मि॥

वि. संख्ययोद्वासयति॥

मन्त्र प्रथममुद्वासयामि द्वितीयमुद्वासयामि तृतीयमुद्वासयामि॥ चतुर्थमुद्वासयामि पंचम मुद्वासयामि षष्ठमुद्वासयामि सप्तममुद्वासयामि अष्टम् मुद्वासयामि॥

मन्त्र प्रथम मुद्वासयामि द्वितीय मुद्वासयामि तृतीय मुद्वासयामि चतुर्थ मुद्वासयामि पंचम मुद्वासयामि षष्टम मुद्वासयामि सप्तम मुद्वासयामि अष्टम मुद्वासयामि नवम मुद्वासयामि दशम मुद्वासयामि एकादश मुद्वासयामि॥

वि. प्रियेणधाम्नेतिहवी थ्ं षिवेद्यांकृत्वास्थाली पूर्वकम्॥

मन्त्र उँ प्रियेण धाम्ना प्रियथ्ं सद आसीद॥

वि. ध्रुवा असदन्निति सर्वाण्या लभतेस्थालीपूर्वकम्।

मन्त्र उँ ध्रुवा असदंनृतस्ययोनौताविष्णोपाहिपाहियज्ञं पाहियज्ञपतिम्॥

वि. पाहिमामित्यस्मान्‌ मालभते॥

मन्त्र उँ पाहिमां यज्ञंन्यम ॥

वि. आत्मालंभः ॥ उदकोपस्पर्शः ॥ अत्रवाव्रतोपायनम ॥

वि. अंतरेणापरार्ग्नीं गत्वा परेणा हवर्नीयं प्राङ्तिष्ठं नग्निर्मीक्ष माणोप- उपस्पृश्यव्रत मुपैत्यग्नेव्रत पत इति ॥ इदमहमितिवा ॥

मन्त्र उँ अग्नेव्रतपते व्रतं चरिष्यामि तच्छ के यंतं मेराध्यताम् ॥.

वि. होतृषदनं कृत्वा परेणवेदि थ्ठं श्रोणिंवोत्तरेण ॥
होत रे३ इहि ॥ इध्मान्समिधमादाय ॥

मन्त्र अग्नये समिध्यमानायानुब्रू इहि ॥

वि. होता संचरेण प्रविश्य ॥

मन्त्र ब्रह्मन्सामिधेनीरनुवक्ष्यामि ॥

मन्त्र उँ प्रजापतेऽनुब्रू ३ हियज्ञं देवतावर्द्धयत्वं नाकस्य पृष्ठे यजमानो अस्तु सप्तऋर्षीणांथ्ठं सुकृतां यत्र लोकस्तत्रेमंयज्ञं यजमानम् च धेहि ॥ उँ अनुब्रू इहि ॥

वि. ब्रह्मप्रसूतोङ्गुलिपर्वाग्रमाथ्ठं समथ्ठं हितथ्ठं हृदयदेशें ऽज लिं प्रतिष्ठाप्यदक्षिणाम् च पादं वेद्याः श्रोणि समंकृत्वाद्यावापृ थिव्योरन्तर मीक्षमाणोनमः क्रन्दं जपेत् ॥

मन्त्र उँ नमः प्रवक्त्रे नमऽउपवक्त्रे नमोद्रष्टे नमोनुष्यात्रे ॥ क ऽ इद मनुवक्षति सऽइद मनुवक्षति क ऽ आर्त्विज्यं करिष्यति स ऽ आर्त्वि ज्यं करिष्य त्यृचः प्रपद्येयजुः प्रपद्ये सम प्रपद्ये ब्रह्मप्रपद्ये नात्तां छंदसां मातरं प्रापद्येम् प्रपद्ये भुवः भूः प्रपद्ये प्रपंद्येस्वः प्रपद्ये-भूर्भुवः स्वः सर्वंप्रपद्ये ॥

वि. संतंन्वंनिवमेनुब्रूहीत्याहयजमानोऽगुष्ठाभ्यांचाव वाधते-पादाभ्यां वा ॥

मन्त्र संतंन्वंनिवमेनुब्रूहि ॥

मन्त्र इदमहंपंच दशेनवज्रेणो भ्रातृव्य अमाववाधे ॥

वि. प्रतिप्रणवमाधानं समिद्ध इति प्रांगतः सर्वमिध्ममेक वर्जमनुयाजाश्चेत् ॥

मन्त्र हिं हिं हिं ॥ भूर्भुवः स्वरोंम ॥ उँ प्रवोवाजा अभिद्यवोहविष्मतो घृताच्या देवांजिगाति सुम्नयों ३म ॥१॥ प्रवोवाजा-अभिद्यवो हविष्मं तोघृताच्या देवाँ जिगाति सुम्नयोम ॥२॥ प्रवोवाजा अभिद्यवो हविष्मं

तांधृताच्या देवां जिगाति सुम्नयों३म ॥४॥ तन्त्वासमिद्भि रङ्गिरो घृतेन वर्द्धयामसि बृहच्छो चाय विष्ठयों३म ॥५॥ सनः पृथुश्रवाय्य मच्छा देववि वासस्सि वृहदग्ने सुर्वीयों ॥६॥ मीडेन्योनमस्य स्तिरस्तमाथ्ं सिदर्शतः समग्निरिध्यतेवृषों३म ॥७॥ वृषोअग्निः समिध्यतेश्वो नदेववाहनः त थ्ं हविष्मं तईडतों३म ॥८॥ वृषणन्त्वावयंवृषन्वृषणः समिर्धीमहि अग्नेदीद्यतंवृहों३म ॥९॥ अग्निंदूतंवृर्णीमहे होतारं विश्ववेद सं अस्ययज्ञस्यसुक्रतों३म ॥१०॥ समिध्यमानोऽअध्वरे ग्निः पावकइडयः शोचिष्के शस्त मीमहो३म ॥११॥ समिद्धोऽ-अग्नऽआहुतदेवान्यक्षिस्वध्वरत्व थ्ं हिहव्य वाडसों३म ॥१२॥ माजुहोतादुवस्यताग्नि प्रयत्यध्वरेवृर्णीध्व थ्ं हव्यवाहनों३ ॥१३॥ माजु-होतादुवस्यताग्नि प्रयत्य ध्वरेवृर्णीध्व थ्ं हव्यवाहनों३ ॥१४॥ माजुहोतादुवस्यताग्निं प्रयत्यध्वरेवृर्णीध्व थ्ं हव्यवाह नों॥ मग्नेमहाँ३ असिब्राह्मणभारत आँगिरस बार्हस्पत्य भारद्वाज सैन्यगार्ग्य॥ देवेद्धः मन्विद्धः ऋषिष्टुतः विप्रानुम दितः कविशस्तः ब्रह्मसथ्ं सितः घृताहवनः प्रर्णीर्यज्ञानाम् रर्थारध्वरणां अतूर्त्तोहोता तूर्णिहव्यवाट् आस्पात्रंजुहूर्देवा नांचमसोदेवपानः अराँ३इवाग्नेनेमिर्देवाँस्त्वं परिभूरसि॥ आवहदेवान्य जमानाय॥ अग्निमग्न आ३वह॥ सोममा३वह॥ अग्निमा३वह॥ उपांशु॥ अग्निषोमौ॥ उच्चैः॥ आ३वह॥ अग्निषोमावा३वह॥देवाँआज्यपाँ आ३वह॥ अग्निथ्ं होत्राया३वह॥ स्वंमहिमानमा३वह॥ आचवहजातवेदः सुयजा च यज॥

वि. अनुवचनान्ते वेदेना हवर्नीयं त्रिरुपवाज्य स्रुवेणपूर्व माघा-रमाधार्याह॥मनसा॥

वि. अनुवचनान्ते वेदेना हवर्नीयं त्रिरुपवाज्य स्रुवेण पूर्वमाधार माधार्याह॥ मनसा॥

वि. अनुवचनान्ते वेदनाहवर्नीयं त्रिरुपवाज्य स्रुवेणपूर्वमाधारमाधार्याह॥ मनसा॥

मन्त्र ॐ प्रजापतये स्वाहा॥ इदं प्रजापतये न मम॥

मन्त्र ॐ अग्निमर्ग्रात्समृद्धी॥



वि. इध्मसन्नहनैरनुपरिधि समार्ष्टि अग्ने वाज जिगीवांसमित्रिः परिक्रामन॥

मन्त्र ओ३म् अग्नेवाज जिद्वाजंत्वासरिष्यं वाज जित ꣳ संमार्ज्मि ॥

वि. सकृन्मंत्रेणद्विस्तूर्ष्णीम् ॥ दक्षिणतः पश्चादुत्तरतश्च ॥ त्रिस्तूर्ष्णीं- उपरि ॥

वि. अपरमाह्वर्नीयादं जलिंकरोति ॥ नमो देवेभ्य इति स्वधापितृभ्य इति दक्षिणत उत्तानम् ॥

मन्त्र ओ३म् नमोदेवेभ्यः ॥ ओ३म् स्वधापितृभ्यः अपउपस्पृश्य ।

वि. सुयमेमइति जुहूपभृतावादायोत्तरां जुहूँ कृत्वा ॥

मन्त्र ओ३म् सुयमे मे भूयास्तमस्कन्न मद्य देवेभ्य आज्य ꣳ संभ्रियासम् ॥

वि. दक्षिणातिक्रामत्यं घ्रिणाविण्णविति ॥

मन्त्र ओ३म् अंघ्रिणा विष्णोभात्वावक्र मिषम् ॥

वि. परिर्धानपरेण संचरोह्योष्यतः सव्येनेतो दक्षिणेनामुतोवसुमती मित्यवस्थाय ॥

मन्त्र ओ३म् वसुमती मग्नेतेच्छाया मुपस्थेषं विष्णोस्थानमसि ॥

वि. इतऽइन्द्रइति जुहोति उत्तराधारम् ॥

मन्त्र ओ३म्इतऽ इन्द्रोर्वीर्य्यं मकृणोदूर्ध्वोध्वर आस्थात् ॥

ओ३म् अग्नेर्वेहोत्रं वेर्दूत्य मवतां त्वां द्यावापृथिवी अवत्वंद्यावापृथिवी अवत्वंद्यावा पृथिवी स्विष्ट कृद्देवेभ्य इन्द्र आज्येन हविषा भूत्स्वाहा ॥ इद्रमिन्द्रायनमम ॥

वि. अस ँ स्पर्शयन् स्रुचावेत्य जुह्वा ध्रुवा ँ समनक्ति संज्योतिषेति ॥

मन्त्र संज्योतिषा ज्योतिः गच्छताम् ॥

वि. निधायस्रुचौ ॥ इतराम वेदोप ग्रहेण ॥ इध्मसन्नह नान्यादाय ॥श्राव्य ॥ होतृवरण्म् ॥

मन्त्र ओ३म्३श्रा३वय ॥

अस्तुश्रौ३षद् ॥

मन्त्र ओ३म् अग्निर्देवोदैव्योहोतादेवान्य क्षद्वि द्वाँ श्चिकित्वान् ॥ मनुष्यवत् ॥ भारद्वाजवदंगिरोवद्बृहस्पतिवत्सिनिव दूगर्मवत् ॥ ॥ब्रह्मण्वदाचवक्ष द्वाह्मणा अस्य यज्ञस्य प्रावितारः ॥

वि. उपाँशु ॥ अमुकशर्माहोता ॥ उच्चैः ॥ मनुष्यः ॥

मन्त्र ओ३म् एतत्वा देवसवित वृणतेऽग्निꣳ होत्राय सहपित्रावैश्वानरेणाग्ने पूषन् बृहस्पते [illegible] सूना ँ [illegible]

स्वादित्या अदितयेश्यामानेहसो जुष्टाम द्यदेवेभ्यो वाचमुद्या संजुष्टांब्रह्मभ्यो जुष्टांनराश ६. शायषद दद्यहोतृवर्षे जिह्वं चक्षुः परापतत्॥ अग्निषृत् पुराभ्रिया जातवेदा विचर्षणिः॥ उँ षण्मोर्वीर ६. हसस्पांत्वग्निश्चपृथि वीचापश्चवात श्चाहश्च रा त्रिश्चेत्ये ता मा देवता आर्तेर्गोपायन्तु॥

वि. इत्यातमान मालभते॥ उदकोपस्पर्शः

मन्त्र इन्द्रमंन्वार भामहे होतृवर्जे पुरोहितं येनायंनुत्तम ६. स्वद्देवा अंगिरसोदिवम्॥

वि. इति अध्वर्युमग्नीधं च संमृशति॥ दक्षिणयोर ६. शयोः॥ अध्वर्युपार्श्वेनवा॥

वि. होतातौच संमृष्टौ॥ उपविशतः॥

वि. इध्मसंनहनान्या दायतैः संमार्ष्टि मुखंत्रिः प्रदक्षिणम्

मन्त्र उँ संमार्गोसिसंमा प्रजया पशुभिर्ब्रह्म वर्चसेन चमृड्ढि॥

वि. सकृन्मंत्रेणद्धिस्तूष्णीम्॥

मन्त्र उँ अपमार्गोस्यपमापाप्मनापापेन चमृड्ढि॥

वि. एन्द्रीमावृतमंन्वावर्तत॥ इत्यावृत्यप्रदक्षिणम्॥

वि. होतृषदनात्तृणमङ्गुष्ठोपक निष्ठिकाम्यां आदायदक्षिणापरस्यां दिशिनिरस्येत्॥

मन्त्र उँ निरस्तः परावसुः सहतेनयंद्विष्मः॥ उदकोपस्पर्शः॥

मन्त्र उँ इदमह मर्वावसोः सदने सीदामि॥

वि. इत्युपविश्य॥जपन्॥

मन्त्र विश्वकर्मस्तॅंनूपा असिमामोदोषिष्टं मामाहि ६ सिष्टमे रववाँलोकः॥

वि. इत्युदङ्गे जपेत्॥ अग्निमीक्षमाणो जपति॥

मन्त्र उँ विश्वेदेवाः शास्तनभायथेहहोतावृतोमन वैठांनिषद्यप्रमेब्रूत-मागधेयंठा था वोये नपथाहव्यमावोवहानि॥

मन्त्र उँ अग्निर्होतावेत्त्वग्नेर्होत्रंवेत्तु प्रावित्र ॰ंसाधुते यजमान देवता॥ उपांशु॥ योग्निॅं होतारमवृधाः॥उच्चैः॥ घृतवतीमध्वर्योः सुचमास्य स्वदेवयुवं विश्ववारामीडा महै देवाँ३ईडिन्यान्नमस्यामनमस्यान्यजाम यज्ञियान्॥

वि. घृतवती मित्त्युक्ते सुचावादायातिक्रम्याश्राव्याह॥ समिधोयजेति पंच

प्रयाजान् समिद्धतमेनाभि देशेधारणम् ॥

मन्त्र उँ३श्रा३वय ॥ अस्तुश्रौंषद् ॥ समिधोयज ॥

मन्त्र ये३यजामहे समिधः समिधोअग्न आज्यस्यव्यन्तु ॥ होता ॥ वौ३षट् ॥ यजमान ॥ इदं समिद्भ्योनमम ॥ एकांममएकातस्योस्मान्द्वेष्टि यं चवयं द्विष्मः ॥ त्विषिमानभूयासम ॥

प्रयाजानुमंत्रणं ॥ वषट्कारमाम आयुः प्रमोर्षावागोजः सहौजोमयि प्राणापानौ पातम् ॥

वि. आत्मानमालभते ॥ उदकोपस्पर्शः ॥ एवं प्रतिवषट्कारं सर्वत्र वषट्कारोनुमंत्रणम् ॥

मन्त्र उँ श्रावय ॥ अस्तु श्रौ३षद् ॥ यज ॥ प्रेषितोध्वर्युः ॥

मन्त्र ये३यजामहेत नूनपादग्न आज्यस्यवेतु वौं३षद् ॥

इदंतनून पाते नमम ॥ द्वौममद्वेतस्य योस्मान् द्वेष्टि यं च वयंद्विष्मः अपचितिमान् भूया सम् ॥ तनूनपातं संनाय्ययाजिनांतु ॥

मन्त्र उँ३श्रा३वय ॥ अस्तुश्रौ३षद् ॥यज ॥

मन्त्र ये३यजामहइडो अग्न आज्यस्यन्यन्तुवौं३षद् ॥

इद् मिड् भ्यो नमम ॥ त्रयो मम ॥ तिस्रस्तस्य यो स्मान् द्वेष्टियंचवयंद्विष्मः ॥ यशस्वीभूयासम् ॥

वि. चतुर्थे प्रयाजेसमान यनम् ॥

मन्त्र उँ३श्रावय ॥ अस्तुश्रौ३षद् ॥यज ॥

ये३यजामहे बर्हिरग्न आज्यस्य वेतु वौं३षट् ॥ इदंबर्हिषिन मम ॥ चत्वारोमम ॥ चतस्रस्तस्योस्मान् द्वेष्टि यं चवयं द्विष्मः ॥ ब्रह्मवर्चसी भूयासम् ॥

मन्त्र उँ३श्रा३वय ॥ अस्तुश्रौं३षद् ॥यज ॥

मन्त्र ये३यजामहे स्वाहाग्निॅ स्वाहासोम ॅ स्वाहग्नि ॅ स्वाहा ॥ उपाँशु ॥ अग्निषोमौ ॥ उच्चैः ॥ स्वाहाग्नीषोमौस्वाहा देवा आज्यपाजुषाणा अग्न आज्यस्यव्यन्तु वौंषद् ॥ इदमग्नये सोमायाग्नयेऽग्निषोमाभ्या-मग्नीषोमाभ्यां देवेभ्य आज्यपेभ्योग्नये स्विष्टकृते चनमम ॥ पंचमम ॥ नतस्यकिंचन योस्मान्द्वेष्टि यंचवयं द्विष्मः ॥ अन्नादोभूयासम ॥ एत्यजुह्वाभि धारणं ध्रुवायाः हविषः हविषः उपभृतश्च ॥ आज्यभागाभ्यां चरतिवार्त्र ध्रावाज्य भागौ ॥

प्रै. अग्नयेनुब्रू ३हि॥

मन्त्र अग्निर्वृत्राणि जंघन द्रविणस्यु विंपंनया॥ समिद्धः शुक्र आहुतौं ३म॥

वि. ध्रुवायाः प्रथमस्तूर्ष्णीम्॥

मन्त्र उँ आप्यायतांध्रुवा हविषा घृतेन यज्ञं यज्ञं प्रतिदेवयड्भ्यः सूर्याया ऊधो आदित्या उपस्थ ऊरुधारापृथिवीयज्ञे अस्मिन॥ ॐ आ. द्वितीयः॥ उँ आ.॥ तृतीयः ० उँ आ. चतुर्थः॥ उँ आ. पंचमः॥ उँ आ. षष्ठो ध्रुवायाम्॥

वि. अतिक्रम्यश्राव्याह॥

मन्त्र उँ श्रा३वय॥ अस्तुश्रौ३षट्॥ अग्निंयज॥

मन्त्र ये३यजामहेग्निंजुषाणो अग्निराज्यस्यवेतुवौ३षट्॥ इदमग्नयेनमम॥

वि. आग्नेयमुत्तर पूर्वार्द्धे॥ प्रैष सोमायानुब्रू ३हि॥

मन्त्र त्व ॐ सोमासिसत् पतिस्त्व ॐ राजोतवृत्रहात्वं भद्रो असिक्रतौं३म्॥

वि. ध्रुवायाः प्रथमस्तूर्ष्णीम्॥

मन्त्र उँ आप्यायतां ध्रुवहि विषाघृतेन यज्ञं यज्ञं प्रति देवय ड्भ्यः सूर्याया ऊधो अदित्या उपस्थ उरुधारापृथिवीयज्ञे अस्मिन्॥

॥द्वितीयः॥ तृतीयः॥ चतुर्थः॥ पंचमः॥ षष्ठोध्रुवायाम्॥

वि. अतिक्रम्याश्राव्याहसोमं यजेति॥

मन्त्र उँ३श्रा३वय॥ अस्तुश्रौ ३ड्षट॥ सोमंयज॥

मन्त्र ये ३यजामहे सोमंजुषाणः सोम आजस्य हविषो वेतू३ वौ ३षट्॥ इदं सोमायनमम॥ दक्षिणपूर्वार्द्धे सौम्यम्॥

## अथ प्रधानयाग

प्रै. अग्नयेनुब्रू३हि॥

मन्त्र उँ अग्निर्म्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम् अपाॐ रेताॐ सिजिन्वतौं३म्॥

वि. स्थालीतो जुहू मुपस्तीर्यमध्यात् पूर्वार्द्धा द्विरवदानग्रहणं॥ त्रिर्जामदग्नीनाम्॥ पश्चांत्तृतीयम॥ प्रत्युपस्तारः॥ क्षताम्यंगः॥

वि. अतिक्रम्याश्राव्याहाग्निं यजेति॥

मन्त्र उँ३श्रा३वय॥ अस्तुश्रौ३षट॥अग्निंयज॥

मन्त्र ये३यजामहेग्निं भुंवो यज्ञस्य रजसश्चनेता यत्रानि युद्भिः सचसे शिवाभिः दिविमूर्द्धानं दधिषेस्वर्षां जिह्वामग्ने चकृषेहव्यवाहौं३

वौ३षट्॥ इदमग्नयेनमम॥

| | |
|---|---|
| वि. | उपांशुयागः॥ उपांशु॥ अग्नीषोमाभ्यां॥ उच्चैः॥ अनुब्रू ३हि॥ |
| मन्त्र | उपांशु॥ अग्निषोमाविम ঁ सुमेशृणुतं वृषणाहवं प्रतिसूक्तानिहर्यतं भवतं दाशुषेमयः॥ उच्चैः॥ॐम्॥ |
| वि. | ध्रुवायाः प्रथमस्तूष्णीम्॥ |
| मन्त्र | ॐ आप्यायतांध्रु बाहविषाघृतेन यज्ञं यज्ञं प्रति देवयद्भ्यः सूर्याया उधो अदित्या उपस्थ उरुधारापृथिवीयज्ञे अस्मिन् द्वितीयः॥ तृतीयः॥ चतुर्थः॥ पंचमः॥ षष्ठोध्रुवायाम्॥ |
| वि. | अतिक्रम्याश्राव्याहाग्नीषोमौयजेति॥ |
| मन्त्र | ॐ३श्रा३वय॥ अस्तुश्रौ३षट्॥ उपांशु॥ अग्निषोमौ उच्चैः॥ यज॥ |
| मन्त्र | ये ३ यजामहे ॥ उपांशु ॥ अग्निषोमौ जुषाणावग्नीषोमावाज्य स्यवीताम्॥ उच्चैः॥ वौषट्॥ उपांशु॥ इदमग्नीषोमाभ्यांन मम॥ |
| प्रै. | अग्नीषोमाभ्यामनुब्रू३हि॥ |
| मन्त्र | अग्नीषोमास वेदसासहूती वनतं गिरः संदेवत्रा बभूवथौं३म्॥ |
| वि. | स्थालीतो जुह्वा मुपस्तीर्यमध्यात् पूर्वार्द्धात् द्विरव दानग्रहणम्॥ त्रिर्जामदग्नीनां पश्चात्तृतीयं प्रत्युपस्तारः॥ क्षताभ्यंगः॥ अतिक्रम्या श्राव्याहाग्नीषोमौयजेति॥ |
| मन्त्र | ॐ३श्राइवय॥ अस्तुश्रौइषट्॥ अग्नीषोमौयज॥ |
| मन्त्र | ये३ यजामहेग्नीषोमौ युवमेतानि दिविरोचनान्यग्निश्च सोमसक्रतू अधत्तंम् युव ঁ सिध् ঁ रभिशस्तेरवद्यादग्नीषोमाव मुंचतंगृभीतां वौ३षट्॥ इदमग्नीषोमाभ्यां न मम॥ |
| प्रै. | अग्नयेस्विष्टकृतेऽनुब्रू ३हि॥ विराजौ संयाज्ये॥ |
| मन्त्र | प्रेद्धो अग्ने दीदिहि पुरोनो जस्रथा सूर्म्यायविष्ठ॥ त्वाঁ शश्वत उपयंतिवाजो३म्॥ |
| वि. | स्थालीतो जुह्वा मुपस्तीर्ययावद्धविरुत्तरार्द्धात् स्विष्टकृतोद्विश्चाभिधारणम्॥ नक्षताभ्यंगः॥ अतिक्रम्या श्राव्याहाग्नि ঁ स्विष्टकृतंयजेति॥ |
| मन्त्र | ॐ ३श्रा३वय॥ अस्तुश्रौ३षट्॥ अग्नि ঁ स्विष्ट कृतंयज॥ |
| मन्त्र | ये३यजामहेग्निঁ स्विष्टकृत मयाडग्निरग्नेः प्रियाधामान्ययाड् |

सोमस्यप्रिया धामान्य याडग्रेः प्रियाधामान्या ॥ उपांशु ॥ अग्निषोमयोः च्चैः ॥ प्रियाधामान्य उग्निषोमयोः प्रियधामान्य याड् देवाना माज्यपानां प्रियाधामानि यक्षदग्नेर्होतुः प्रियाधामानि यक्षत्स्वं मह्निमान मायजता मेज्याः इषः कृणोतु सो अध्वरा जातवेदा जुषना थ्ठ्ँ हविरिमो अग्नेर्वीत त मानिहव्या जस्रो वक्षिदेवता तिमच्छ प्रतिन ई थ्ठ्ँ सुरभीणिव्यन्तु वौ३षट् ॥ इदमग्नये स्विष्टकृते नमम ॥

वि. असथ्ठ्ँसृष्टा माहुतिभिः निधाय स्रुचौ इतरांवेदोपग्रहेण संचरमभ्युक्ष्य प्राशित्र मवद्यति यवमात्रं पिप्यल मात्रंवा अन्न्यतर आज्यमुभयतोवा संचरेण ब्रह्मणेप्रदाय ॥ पूर्वेणैके ॥

मन्त्र उँ मित्रस्यत्वा चक्षुषा प्रतीक्षे ॥

वि. इति प्राशित्रं प्रतीक्षते ॥ देवस्यत्वेतिगृह्णाति ॥

मन्त्र देवस्यत्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णोहस्ताभ्यां प्रतिगृह्णामि ॥

वि. अग्निष्ट्वे प्राश्नाति ॥

मन्त्र उँ अग्नेय्ष्ट्वास्येन प्राश्नामि ॥

वि. दंतैरनुपस्पृशन् ॥ प्रक्षाल्यपात्रं नाभिमालभते ॥

मन्त्र उँ यापूचन्तर्देवता स्ताइदूँ शमयन्तु स्वाहाकृतं जठरमिन्द्रस्य गच्छ घसिनामे मासं पृकथा ऊर्ध्वं मेनाभेः सीदेन्द्रस्यत्वा जठरे सादयामि ॥

वि. अध्वर्यु रप उपस्पृश्य ॥ इडां पंचावत्तां करोति ॥

इडापात्र्यु पस्तारः ॥ दक्षिणतोमध्याच्च यावद्धविः स्विष्ट कृद्धदाज्यं षडवत्तं ब्रह्मभागश्च ॥ ब्रह्मभागो ध्रुवायाम् ॥ यजमानभागं पूर्वार्द्धां दीर्घं प्रशीर्य पुरस्ता ध्रुवायाः करोति ॥ इडा थ्ठ्ँ होत्रे प्रदाय अविसृजन् दक्षिणातिक्रामति ॥ इडां प्रतिगृह्यऐडेनाज्येन होतुरंगुलि पर्वणी अनक्ति ॥ ओष्ठयोर्विलिंपेदधरम धरेणोत्तरेण ॥

मन्त्र उँ मनसस्सपतिनाते हुतस्याश्नार्मीषे प्राणाय ॥ वाचस्पतिना तेहुतस्याश्नाम्यूर्ज उदानाय ॥ अवजिघ्रत्येके ॥

वि. उदकोपस्पर्शः ॥ अवांतरेडामादधाति ॥ प्रथमः द्वितीयः तृतीयः चतुर्थः ॥ होतास्वयं पंचम मादत्ते ॥ इडांसर्वेन्वार भंते ॥

मन्त्र उपांशु ॥ उँ उपहूत थ्ठ्ँ रथंतर थ्ठ्ँ सहपृथिव्योपमा थ्ठ्ँ रथंतर थ्ठ्ँ सहपृथिव्याहूयता मुपहूतं वामदेव्य थ्ठ्ँ सहान्तरिक्षेणोपमां वामदेव्य थ्ठ्ँ सहान्तरिक्षेण हृयता मुपहूतं वृहत्सहदिवोपमां वृहत्सह दिवाह्वता

मुपहूतागावः सहर्षमा उपमांगावः सहऋषमाहूयंता मुपहूता सप्तहोत्रा सौम्येनाध्वरेणोपमा ‍ᳫं सप्तहोत्रा सौम्येनाध्व रेणहूयता मुपहूतेडा तत्तुरिरुप मामिडा ततुरिर्ह्वूयता मुपहूतः सखाभक्ष उपमाᳫं सखाभक्षोहूयता मुपहूत ᳫं हेगुपमाᳫं हेहूयता मुपहू तोग्नि रुपहूतः ॥ उच्चैः ॥ इडोपहूतो पहूतेडोपो अस्माँ३ इडाहू यता मिडोपहूता ॥

वि. इडोपहूतेत्युच्चपमाने आग्नेयं वर्हिषदं करोति ॥ यजमानः ॥

मन्त्र ॐ ब्रध्नपिन्नव स्वायुर्मेधुक्ष्व प्रजांमेधुक्ष्व पशून्मेधु क्ष्ववल मेधुक्ष्व क्षत्रंमेधुक्ष्व विशोमेधुक्ष्व योस्मान् द्वेष्टियंचवयं द्विष्म स्तस्य प्रजया पशुभिराप्यायस्व ॥

वि. तंचतुर्द्धाकृत्वा बर्हिषि ऋत्विग्भ्यआदिशत्ति ॥

इदं ब्रह्मणः ॥ इदᳫं होतुः ॥ इदमध्वर्योः ॥ इद मग्नीधः ॥

अत्र पितर इति यजमानो जपति ॥

मन्त्र ॐ अत्र पितरो मादयध्वंयथाभाग मावृषाध्वम् ॥

वि. विसृ ज्यामि मदन्तेति जपति ॥

मन्त्र ॐ अमीमदन्त पितरो यथाभाग मावृषायिषत ॥

वि. उदकोपस्पर्श ॥ एकैकमाहरति ॥ इदं ब्रह्मणे ॥ इदं ᳫं होत्रे इदमध्वर्य वे ॥ इदमग्नीधे ॥ द्यावापृथिव्योरु रुपह्वानेग्नी धेषडवत्तंदद्यात् ॥

मन्त्र ॐ मानवीघृतपद्युत मैत्रावरुणी ब्रह्मादेव कृतो पहूता पहूता दैव्या अध्वर्यव उपहूता मनुष्याः यइमंयज्ञ मवान्येचयज्ञपतिं-वर्द्धानुपहूते द्यावापृथिवीपूर्वजे ऋतावरी देवी देवपुत्रे उपहूतोयं यजमान उत्तरस्यांदेव यज्याया मुपहूतोभूयसी हविष्करण उपहूतोदेवाम इद ᳫं हविर्जुषंता मितितास्मिन्नुपहूतः ॥

वि. आशासने मर्यीद मिति यजमानो जपति ॥

मन्त्र ॐ मयीद मिंद्रऽइन्द्रियमदधात्वस्मान्राऐमघवानः सचन्तां ॥ अस्माकं ᳫं सन्त्वाशिषः सत्यानः संत्वाशिषः॥

वि. उपहूतां प्राश्नंतियुक्ताः ॥ यजमानश्च ॥ अग्नीत् षडवत् प्राश्नाति ॥

मन्त्र ॐ उपहूता पृथिवीमातोपमां पृथिवी माता हूयतामग्निराग्नी ध्रा त्स्वाहा ॥ आचम्य ॥

मन्त्र ॐ उपहूतोद्यौष्पि तोपमां द्यौष्पिता हूयता मग्निराग्नीध्रात्स्वाहा ॥

वि. आचम्य॥ पवित्र योर्मार्जयंते परेणवेदि थ्रं सुमित्रियान् इति॥

मन्त्र ॐ सुमित्रियान ऽ आप ऽ ऽ॥षधयः सन्तु॥

वि. यजमान स्यप्राणा पानौपातमिति प्रस्तरेतेकरोति॥

मन्त्र ॐ यजमानस्य प्राणापानौपातम॥

वि. अत्रवाब्रह्मा प्राश्नाति॥ भागमस्मै परिहरति॥ ब्रह्मभागं ब्रह्मणे॥ यजमानभागं यजमानाय॥

वि. अन्वाहार्यमभिधार्योद्वास्यान्तराब्रह्मयजमानौ धृत्वा वेद्यांनिधाया-लभते॥

मन्त्र प्रजापतेर्भागोऽस्यूर्जस्वान् पयस्वान् प्राणापानौमेपहि समानव्यानौमेपाहि उदानव्यानौमेपाध्वयूर्गस्यूर्जं मयि धेत्धन क्षितिरसि मामेक्षेष्टा अमुत्राऽमुष्मिल्लोक इहच॥ (संकल्प) अस्याः पौर्णमासेष्टिः समृध्यर्थं अयं अन्वां हार्यो दक्षिणाब्रह्मादिक्र त्विग्भ्यः समविभागेनाहं संप्रददे॥

वि. ब्रह्मन् यस्ते भागः सप्रतिगृह्मताम्॥ होतर्यस्तेभागः सप्रतिगृह्मताम्॥ अध्वर्योयस्ते भागः सप्रतिगृह्मताम्॥ अग्नीद् यस्ते भागः स प्रति गृह्मतां॥

मन्त्र ॐ द्यौस्त्वा ददातु पृथिवी त्वाप्रति गृह्णातु॥

वि. सा दक्षिणा उद गुद्वासयति॥ हविश्च॥ समस्योल्मुके स-मिधमादायाह॥

मन्त्र ब्रह्मन्प्रस्था स्यामि॥ समिधमाधायाग्नि मग्नीत्संमृड्ढि॥

वि. एतंत इति ब्रह्मा जपति॥

मन्त्र ॐ एतंतं देवसवितर्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणो तेन यज्ञ मव तेन यज्ञ पतिं तेन मामव मनोजूति र्जुषता माज्यस्य बृहस्पतिर्य ज्ञमिमंतनोत्वरिष्टं यज्ञ थ्रं समिमं दधातु विश्वेदेवास ऽइहमा दयं तामों ३ प्रतिष्ठ॥

वि. ॥एषात इति होतानु मंत्रयते॥

मन्त्र ॐ एषाते अग्ने समित्तया वर्द्धस्वचा चप्यायस्व वद्धिषीमही च वयमा चप्प्यासिषीमही॥

वि. संमार्ष्टि पूर्ववद परिक्रामन सकृत्सकृत्ससृवा थ्रं समिति॥

मन्त्र ॐ अग्नेर्वाजजित्वाजंत्वा ससृवा थ्रं संवाजजित संमार्ज्मि॥

वि. तूर्ष्णीम् उपरि॥ ब्रह्मानुज्ञातोनुयाजै स्त्रिमिश्चरत्यौपभृत थ्ं समानीय अतिक्रम्या श्राव्याह॥ देवान्य जेति॥

मन्त्र ॐ ३श्राइवय॥ अस्तुश्रौ३षद्॥ देवान्यज॥

मन्त्र ॐ देवंबर्हिर्वसुवने वसुधेयस्यवेतु वौ ३षद्॥ इदं देवाय बर्हिषिनमम॥

मन्त्र ॐ ३श्रा३वय॥ अस्तुश्रौ३षद्॥ देवान्यज॥

मन्त्र ॐ देवोंनराश थ्ंसोवसुवने वसुधेयस्य वेतु वौ ३षद्॥

इदं देवाय नराश थ्ंसायनमम॥

मन्त्र ॐ३श्रा३वय॥ अस्तुश्रौ३षद्॥ देवान्यज॥

मन्त्र ॐ देवोनराश थ्ंसोवसुवने वसुधेयस्यवेतु वौ३षद्॥ इदं देवायनराश थ्ं साय न मम॥

मन्त्र ॐ श्रा३वय॥ अस्तु श्रौ३षद्॥ देवान्यज॥

मन्त्र ॐ देवोऽअग्निः स्विय कृत्सु द्रविणामन्द्रः कविः सत्यमन्मायजी होता होतुर्होतु रायर्जीया नग्रेयां देवानयाडयां ३ अपिप्प्रेर्येते होत्रे अमच्छत॥ ता थ्ंससनुषी थ्ंहोत्रां देवं गमां दिवेदे वेषु यज्ञ मेरयेम थ्ंस्विष्ट कृच्चाग्रे होताभूर्व सुवने वसुधेयस्य नमो वाके वीही ३ वौ ३षद्॥

इदंद्रदेवायाग्नये स्विष्टकृते नमम॥

वि. चतुर्थ थ्ंसमानीय॥

मन्त्र ॐ देवेभ्यः स्वाहा॥ इद्रं देवेभ्यो नमम॥

वि. निधायस्रुचौ॥ इतरांवेदोपग्रहेण॥ एत्य जुहूपमृ-तौव्यूहति॥

मन्त्र ॐ अग्नेरग्नीषोमयोरग्नीषोम योरुज्जितिमनूज्ज यत्वं यंयजमानो वाजस्यैनं प्रसवेन प्रोहामि॥

मन्त्र ॐ अग्नी रग्नी षोमावग्नी षोमौतम पनु दंतुयम यं यजमानो द्वेष्टि यश्चैनं द्वेष्टि वाजस्यैनं प्रसवेनापोहामि॥

वि. अभ्युक्ष्य जुह्वा परिधीन नक्ति यथापूर्वम् वसुभ्य इति प्रतिमंत्रम्॥

मन्त्र ॐ वसुभ्यस्त्वा अनज्मि॥

मन्त्र ॐ रुद्रेभ्यस्त्वा अनज्मि॥

मन्त्र आदित्येभ्यस्त्वा अनज्मि॥

वि. नप्रस्तरेतेकरोति॥ प्रथमं परिधिंगृहीत्वा श्राव्याह।

मन्त्र ॐ ३श्रा३वय॥ अस्तुश्रौषट्॥

प्रं० इषतादैंव्या ह्वोंतारोभद्र वाच्यायप्रेषितो मानुषः सूक्तवाकाय सूक्ताब्रू३हि॥

वि. संजानाथा मिति प्रस्त रादानम्॥

मन्त्र ऊँ संजानाथांद्यावापृथिंवी मित्रा वरुणौत्वावृष्टया वताम्॥

वि. विधृर्ती स्थानेकृत्वा अनत्त्येनं व्यंतुवय इति॥

मन्त्र ऊँ व्यन्तु वयोक्त थ्वं रिह्वाणाः॥

वि. अग्र जुह्वाम्॥

मन्त्र ऊँ व्यन्तु वयोक्त थ्वं रिह्वाणाः॥

वि. मूलंध्रुवायाम्॥ मरुतामितिर्निार्चैधृत्वा॥

मन्त्र ऊँ मरुतां पृषर्तीगच्छ वशां पृश्नि र्भूत्वादिवं गच्छत तोनोवृ ष्टिमावह॥

वि. तृणामादाया नु प्रहरति॥

मन्त्र ऊँ इदं द्यावापृथिर्वाभद्रमभूदार्ध्म सूक्त वाकमुत्त नमो वाक मृध्यास्म सूक्तो च्यमग्रेत्व थ्वं सूक्तवागसि॥ उपश्रुर्तादिवस्पृथिव्योरो-भंन्वर्ताातेऽस्मियज्ञेयजमान द्यावापृथिवी-स्ताथ्वं शंगवी जींवदानृ अत्रश्नु अप्रवेंदे उरुगव्यूर्ती अभयंकृतौ॥ वृष्टि धावारीत्यापाशं भुवौ मयो भुवा ऊर्ज्ज स्वर्तीच पयस्वतीच सूप चरणाच स्वधि चरणाच त्योराविदि अग्निरिद्थ्वं हविरजुषता वीणृधत्तमह्रो ज्यायोकृत॥ सोमइदथ्वं हविरजुषता वींबृ धत्तमह्रो ज्यायोकृत॥ अग्निरिद् थ्वं हवि रजुषतार्वाष्ट धत्तमह्रोज्यायोकृत॥ उपांश्रु॥ अग्निषोमौ॥ उच्चैः॥ इद् थ्वं हविः॥ उपांश्रु॥ अजुषेता मर्वाष्टधेताम्॥उच्चैः॥ मह्रोज्यायः॥ उपांश्रु॥ आक्राताम्॥ उच्चैः॥ अग्निषोमाविद्थ्वं हवि रजुषे-तामर्वाष्ट धेतां मह्रोज्यायोक्राताम्॥ देवाआज्य पा आज्यमजुषंतार्वाष्ट धं तमह्रोज्यायोक्र त॥ अग्निर्होत्रदे थ्वं हविरजुषतार्वावृधतमह्रो ज्योयाक्रत॥ अस्यामृधेद्धोत्राया देवं गपाया माशास्तेथ्वं यं यजमानः॥ अमुकशर्मा यजमानः अह्रिताग्निर्दर्शपूर्णमास चातुर्मास्ययाजी॥ उत्तरौं देवयज्यया माशास्ते भूयो हविष्करण माशास्ते दिव्यं धामाशास्ते यदनेन हविषा शास्ते तदस्यात्तदध्यात्त दस्मै देवा रासंतांतदग्निर्देवो देवेभ्यो वनुतां वयमग्नेः परिमानुषाः॥ इष्टंचवितं चोभेचैनं द्यावापृथिवी अ थ्वं हसस्पाता मिह्गतिर्वामास्येदं च नमो देवेभ्यः॥

मन्त्र उच्चैः॥ अनुप्रहर॥

| | |
|---|---|
| वि. | प्रास्यतृणं॥ चक्षुष्या इत्यानमान भालमते॥ |
| मन्त्र | उँ चक्षुष्पाया अग्रेसि चक्षुर्म्मेपाहि॥ |
| वि. | आत्मानमालभते॥ उदकोपस्पर्शः॥ |
| मन्त्र | संवदस्व॥ अगानर्ग्नात् अगन॥ श्रा३वय॥ श्रौ ३षट॥ |
| प्रै. | स्वगादैंव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रू ३हि॥ |
| मन्त्र | तच्छं योरा वृर्णामहे गातुं यज्ञाय गातुं यज्ञपतये दैविस्वस्तिरस्तुनः स्वस्तिर्मानुषेभ्यः॥ उर्द्धं जिगातुभेषजं शृं शन्नो अस्तु द्विपदेशं चतुष्पते॥ |
| वि. | अनयाप्रादेशं वेदिश्रोणौंनिदधाति॥ परिर्धीन नुप्रहर तियं परिधिमिति प्रथमम्॥ |
| मन्त्र | उँ यमपरिधिंपर्यधत्था अग्रे देव पणिभिर्गुह्यमानः तन्त एत मनुजोषंभराम्पे षनेत्व दप चेतयातै॥ |
| वि. | इतरौच युगपदग्रेः प्रियमिति॥ |
| मन्त्र | उँ अग्रेः प्रियः पाथोपीतम्॥ |
| वि. | स्रुचौप्रतिगृह्णाति स शृं स्रवभागा इति स ँ स्रवांजुहोति। |
| मन्त्र | उँ स शृं स्रवभागास्थेषा वृहन्तः प्रस्तरेष्ठाः परिधेयाश्चदेवाः इमांवाच मभिविश्वे गृणंत आसद्यास्मिन्वर्हि षिमादयध्व शृं स्वाहा। वाट्॥ इदंविश्वेभ्योदेवेभ्यो न मम॥ |
| वि. | घृतार्ची इति ध्रुवि निदधात्य नसि चेद्रहण शृं स्फ्ये पात्र्यां चेत्। |
| मन्त्र | उँ घृतार्चीस्थो धुर्य्यौपात शृं सुम्नेस्थः सुम्नेमाधत्तम्॥ यज्ञ नमश्चत इति वेदि मालभते॥ |
| मन्त्र | उँ यज्ञ नमश्चत उपच यज्ञस्य शिवे संतिष्ठ स्वस्विष्ठे मेसं तिष्ठस्व |
| वि. | वेद शृं होता स्रुक् स्रुवमध्वर्यु राज्य स्थाली मग्नीदादायपत्नीसंयाजेभ्यो गार्हपत्यं गच्छंति॥ अध्वर्युः पूर्व दक्षिणोनगार्ह पत्यमेत्य पूर्वेण परेणां तरेण पत्नी मेकेषां॥ उपविश्य दक्षिणांजान्वाच्य एव शृं सर्व त्रोप विष्ठ होमेषु॥ उपांशु चरंति॥ |
| प्रै. | सोमायानु ब्रू३हि॥ |
| मन्त्र | उँ आप्यायस्व सुमेतुते विश्वतः सोम वृष्णयम्॥ भवावाजस्यसंग थौं३म्॥ |
| वि. | उँ आज्यस्थाल्याश्चतुर्गृहीत ग्रहणम्॥ प्रथमः द्विंतीयः तृतीयः चतुर्थः॥ |

मन्त्र उँ श्रा ३वय ॥ अस्तुश्रौ३षट् ॥ सोमंयज ॥

मन्त्र ये३यजामहे सोम ॐ सन्तेपया ॐ सिसमुजंतुवाजाः संवृष्ण्या न्यभिमातिषाहः आप्यायमानो अमृताय सोम दिविश्रवाॐस्युत्त मानिधिष्वा३वौं३षट ॥ इदं सोमाय नमम ॥

प्रै. त्वष्टॄनुब्रूइहि ॥

मन्त्र इहत्वष्टार मग्रयं विश्वरूप मुप हूये अस्माक मस्तुकेव लोम ॥

प्रथमः द्वितीयः तृतीयः चतुर्थः ॥

मन्त्र उँश्रा३वय ॥ अस्तुश्रौ३षट् ॥ त्वष्टारंयज ॥

मन्त्र ये३यजामहे त्वष्टारं तन्नस्तुरीयमघपोषयित्नुर्देवत्वष्टर्वीर राणस्यस्व यतोवीरः कर्मण्यः सुदक्षोयुक्त ग्रावा जायतेदेवकामावौ३षट् ॥ इदं त्वष्ट्रे न मम ॥

वि. तृतीयेऽन्तर्धानं पुरस्तात् ॥ पत्न्यन्नवारभतेऽध्वर्युम् ॥

प्रै. देवानां पत्नीभ्योनुब्रू ३हि ॥

मन्त्र उँ देवानां पत्नी रुशती रवंतुनः प्रावंतुनस्तुजये वाजसातये याः पार्थिवासोया अपामपि व्रतेतानो देवीः सुहवाशर्मयच्छ तों ३म् ॥

वि. चतुर्ग्रहीत ग्रहणं ॥ प्रथमः द्वितीयः तृतीयः चतुर्थः ॥

मन्त्र उँ ३श्रा ३ वय ॥ अस्तु श्रौ ३षट् ॥ देवानां पत्नीर्यज ॥

मन्त्र ये३यजामहे देवानां पत्नी रुतग्राव्यन्तु देवपत्नी रिन्द्रा रायग्राय्यश्विनीराद् ॥ आरोदसीवरुणा नीभृणोतु व्यन्तु देवीर्यऋतुर्जनीनांवौ३षट् ॥ इदं देवानां पत्नीभ्यो नमम ॥

वि. अंतर्धानमपनीयः ॥

प्रै. अग्रयेगृहपतयेऽनु ब्रू३हि ॥

मन्त्र अग्रिरहोंतागृहपतिः सराजा विश्वावेद जनिमा जातवेदाः देवानामुत योमर्त्यानां यजिष्ठः सप्रयजतामृतावौं३म् ॥

वि. चतुर्गृहीत ग्रहणम् ॥ प्रथमः द्वितीयः तृतीयः चतुर्थः ॥

मन्त्र उँ३श्रा ३वय ॥ अस्तुश्रौ३षद ॥ अग्निंगृह पतिंयज ॥

मन्त्र ये३यजामहे अग्निं गृहपति ॐ हव्य वाडग्नि रजरः पितानो विभुर्विभावासुदृशीकोअस्मे सुगार्हपत्याः समिषोदिदी-घृस्मदग्रक्रसंमिमीहि श्रवा ॐसि३वौ ३षद ॥ इदमग्रये गृहपतये नमम ॥

वि. सशेषं जुहुयात॥ पूर्ववदिडकृत्वा॥

मन्त्र ॐ मनस्पति नाते हुवस्या श्रामीषे प्राणाय॥

मन्त्र ॐ वाचस्पतिनाते हुतस्या श्राम्यूर्ज्ज उदानाय अवजिघ्रतेत्येके॥

मन्त्र ॐ उपहूतᳫं रथंतरᳫं सहपृथिव्योपमा ᳫं रथंतर ᳫं सहपृथिव्या हूयता मुपहूतं वामदेव्य ᳫं सहांतरिक्षेणोप मां वामदेव्य ᳫं सहांतरिक्षेण हूयता मुपहूतं वृहत्सह दिवोपमा वृहत्सह दिवाह्वयता मुपहूता गावः सहर्षभा उपमा गावः सहऋषभाहूयंता मुपहूता सप्तहोत्रा सौम्येना ध्वरेणोपमाᳫं सप्तहोत्रा सौम्ये नाध्वरेण हूयता मुपहूते डातत्तु रिरुपमा मिडात्ततु रिह्वयता मुपहूतः सखाभक्ष उपमा ᳫं सखाभक्षोहूयता मुपहूत ᳫं हेगुपमा ᳫं हेहूयता मुपहूतोग्नि रुपहूतः॥ इडोपहूतो पहूतेडोपो अस्माँ ३इडाहूयता मिडोपहूता॥ मानवींधृत पद्युत मैत्रावरुणी ब्रह्मादेव कृतोपहूतो पहूता दै अध्वर्यव उपहूता मनुष्याः यज्ञमंयज्ञ मवान्ये च यज्ञपतिं वर्द्धानुपहूते द्यावापृथिवी पूर्वजे ऋता वरींदेवी देवपुत्रे उपहूतेयं पत्न्युन्तरस्यां देव यज्या यामुपहूता भूयसि हविष्करणऽउपहूता देवाम इद ᳫं हविर्जुषंता मितितस्या मुपहूताः॥

वि. मर्यादमिति यजमानो जपति॥

मन्त्र ॐ मर्यादमिन्द्र इन्द्रियम दधात्वस्मान्ना योमघवानः सचंताम॥ अस्माक ᳫं संत्वाशिषः॥ सत्यानःसंत्वाशिषः॥

वि. उपहूतां प्राश्नंति॥ लौकिक पवित्रयोर्मार्जयंते॥

मन्त्र ॐ सुमित्रियानऽआपऽओषधयः संतु॥

वि. स्रुक् स्रुवं प्रति गृह्णाति॥ अग्नेदब्धायविति॥

मन्त्र ॐ अग्नेदब्धायो शीतमपाहि मादिद्योः पाहि प्रसित्यैपाहिदुरिष्ट्यै पाहि दुरद्मन्या अविषन्नः पितुंकृणु सुषदायो नौ स्वाहावाद् इदमग्नये अदब्धायवेऽशीतमाय नमम॥

वि. सव्येनावृत्य दक्षिणाग्रौ जुहोति॥ अग्न्य इति सरस्वत्या इति च॥

मन्त्र ॐ अग्नये संवेश पतये स्वाहा॥ इदमग्नये संवेश पतये नमम॥

मन्त्र सरस्वत्यै यशोभगिन्यै स्वाहा॥ इदं सरस्वत्यै यशोभगिन्यै नमम॥

वि. पिष्टलेपां जुहोति॥

मन्त्र ॐ उलूखले मुसले चयश्शूर्प आशिश्लेष दृषदियत्कपाले उत्प्रुषोविप्रुषः संजुहोमिसत्याः संतु यजमानस्यकामाः स्वाहा॥ इदमग्नये नमम॥

वि. पत्नींवेदं प्रमुंचति वेदोसीति ॥

मन्त्र ॐ वेदोसियेनत्वं देववेद देवेभ्यो वेदो भवस्तेन मह्यंवे दोभूयाः ॥

वि. योक्त्रंच ॥

मन्त्र ॐ प्रभामुंचामि वरुणस्य पाशाद्येन मावध्नात्सविता सु शेवः ॥ ऋतुस्य योनौ सुकृतस्य लोकेऽष्टिरां मासहपत्या दधातु ॥

वि. स्तृणात्यावेदं समित्प्रक्षेपः यथेतं निष्क्रामे ह्वोता ॥ ध्रौव थं समिष्ट यजुर्जुह्योति देवा गातु विद इति ॥

मन्त्र ॐ देवा गातु विदोगातुं वित्वागातुमित मनसस्पत इमं देवयज्ञथं स्वाह्रा वातेधाः ॥ इदंवाताय नमम ॥

वि. संबर्हिरिति वर्हिजुह्योति ॥

मन्त्र ॐ संवर्हि रङ्क्ता हविषा घृतेन समादित्यैर्वसुभिंस मरुद्भिः समिन्द्रो विश्वदेवेभिरंक्ता दिव्यं नभोगच्छतु यत्स्वाहा इदं दिव्याय नभसे नमम ॥

वि. वेद्यां प्रर्णाता निनयति परीत्य कस्त्वेति ॥

मन्त्र ॐ कग्न्वा विमुंचति सत्वा विमंचति कस्मैत्वा विमुंचति तस्मैत्वा विमुचांत पोषाय निनयामि ॥

वि. एष वपार्ण मासिकोऽवभृथः ॥ पुरोडाश कपालेन कणान्न पास्यत्यधः कृष्णाजिन थं रक्ष सा मिति ॥

मन्त्र ॐ रक्ष सांभागोसि ॥ नात्रोदक स्पर्शः ॥

वि. पूर्णापात्रं निनयति परीत्य ॥ संततं यजमानों जलिना प्रतिगृह्णाति संवर्चसेति ॥

मन्त्र ॐ संवर्च सापय सासंतनूभिरंग महिमनसास थं शिवेन त्वष्टासुदत्रोविदधातु रायोनुमार्ष्टुतन्वो यद्विलिष्टम् ॥ मुखं विमृष्टे ॥

वि. विष्णुक्रमान् क्रमते दिवि विष्णुरिति प्रतिमंत्रम् ॥

मन्त्र ॐ दिविविष्णुर्व्यक्र थं स्तजागतेनच्छं दसाततो निर्भक्तो योऽस्मांद्वेष्टि यं चवयं द्विष्मः ॥

मन्त्र ॐ अंतरिक्षे विष्णुर्व्यक्र स्तत्रैष्टुभनेच्छं दसाततोनिर्भक्तोयोस्मां द्वेष्टियं चवयं द्विष्मः ॥

मन्त्र ॐ पृथिव्यां विष्णुर्व्यक्रथं स्तगायत्रेणच्छंदसाततोनिर्भक्तो योस्मां द्वेष्टि यं च वयं द्विष्मः ॥

वि. अस्मादंना दिति भागमवेक्षते ॥

मन्त्र ॐ अस्मादंना निर्भक्तो योस्मां द्वेष्टि यं चवयं द्विष्मः ॥

वि. अस्यैं प्रतिष्ठाया इति भूमि मवेक्षते ॥

मन्त्र ॐ अस्यैं प्रतिष्ठायास्ततोनिर्भक्तो योस्मा द्वेष्टि यं चवयंद्विष्मः ॥

वि. अगन्मस्वरिति प्राक् ॥

मन्त्र ॐ अगन्मस्वः ॥

वि. संज्योतिषेत्याह्वनीयम् ॥

मन्त्र ॐ संज्योतिषाभूम ॥

वि. स्वयं भूरितिसूर्यम् ॥

मन्त्र ॐ स्वयं भूरसि श्रेष्ठोरश्मिर्व र्चोदा असिवर्चो मे देहि ॥

वि. सूर्यस्येत्या वर्त्तति प्रदक्षिणम् ॥

मन्त्र ॐ सूर्यस्या वृत मंन्वावर्त्ते ॥

वि. गार्हपत्य मुपतिष्ठतेऽग्ने गृहपत इति ॥

मन्त्र ॐ अग्ने गृहपते सुगृहपति स्त्वयाग्नेऽहंगृहपतिनाभूयासꣳ-सुगृहपतिस्त्वं मयाग्ने गृह पतिना भूयाः ॥ जस्थूरिणौगार्हपत्यानि संतुशतꣳ हिमाः ॥

वि. सूर्य्य स्येत्वा वर्त्तति प्रदक्षिणम् ॥

मन्त्र ॐ सूर्य्यस्यावृत मंन्वावर्त्ते ॥

वि. गच्छति प्राङुरु विष्णविति ॥

मन्त्र ॐ उरु विष्णोविक्रमस्वोरु क्षयाय नष्कृधि ॥ घृतंष्ट तयोनेपिव प्रप्रयज्ञ पतिंतिर ॥ ॐ ततोसितंतुरस्य नुमातनुह्यस्मिंयज्ञेऽस्या ꣳ साधु कृत्याया मस्मिंयज्ञेऽस्मिल्लोक इदं मेकर्मेदंवीर्यम् ॥ आह्वनीयाय नमः ॥ अमुकशर्मा यजमानः अहं सं तनवामि ॥ वृतं विसृ जतेयेनोपेयात् ॥

मन्त्र ॐ अग्नेव्रत पते व्रत मचारिषं तद शकं तन्मेराधि ॥

वि. संचरविमोकः ॥ अतीतनिष्क्रमणं ॥ संयज्ञपति राशि षेतिभागं प्राश्नाति ॥

मन्त्र ॐ संयज्ञपति राशिषायुज्यतां ॥ ब्राह्मणंतर्प्पयितवै ॥

संकल्पः अस्याः पौर्णमासेष्टेः समृद्ध्यर्थं श्रुत्युक्तमेकं ब्राह्मणं सद्य स्तर्प्पयिष्ये ॥ तेन श्री यज्ञ पुरुषः प्रीयतांनमम ॥

वि. कर्मापवर्गे समिधमादधाति ॥ जुह्वोत्युपतिष्ठतंवा ॥

मन्त्र ऊँ नमः कृताय कर्मणे अकृताय कर्मणेनमः ॥ अयाङ्यज्ञं-जातवेदा अंतरः पूर्वोस्मिंनिषद्य सन्व थ्रंसनिथ्रंसुविमुचावि मुंच धह्म स्मभ्यं द्रविणं जात वेदः स्वाहा ॥ प्रदक्षिणा ॥ अग्नेनय सुपथारायें अस्मान्विश्वानिदेव वयुनानि विद्वान् ॥ युयोध्यस्म्यज्जुहुराण मेनो भूयिष्ठान्तेनमऽउक्तिं विधेम नमस्तेगार्हं पत्यायनमस्तें दक्षिणाग्नये शिवा या ह्वनीयायशत्यैवेद्यैनमोनमः ॥१॥ नमं आह्वनीय महावेद्यै नमो नम ब्रह्मणे गार्हपत्याय विष्णवेदक्षिणाग्नये । नमः सभ्या वसत्थ्याभ्यां नमस्ते परमात्मने महाराजैकराजाय नमस्ते भक्तवत्सल ॥२॥ काण्ड द्वयोपपाद्या य कर्म ब्रह्मस्वरुपिणोस्वर्गापवर्गदात्रे च पिणोस्वर्गापवर्गदात्रे च यज्ञेशाय नमो नमः ॥३॥ चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पंचभिरेवच हूयते च पुन र्द्वाभ्यां तस्मै यज्ञात्मने नमः ॥४॥ कालेवर्षतुपर्जन्यः पृथिवीशस्य शालिनी । देशोयं क्षोभरहितो ब्राह्मणाः संतुनिर्भयाः ॥५॥ सर्वेऽपिसुखिनः संतु सर्वेसंतु निरामयाः । सर्वे भद्राणि पश्यंतुमाकश्चिद्दुः ख माप्नुयात् ॥६॥ ज्ञानतोऽज्ञानतोवापिमंत्रकर्म क्रियाविधिः । सम्पूर्णं कुरु यज्ञेश गार्हपत्य नमोस्तुते ॥७॥ अन्यथा शरणं नास्तित्वमेव शरणं मम । तस्मात् कारुण्यभावेन रक्षरक्षहुताशन ॥८॥ अनेन पौर्णमासेष्टि कर्मणाकृतेन तेन श्री यज्ञ पुरुषः प्रीयतां ऊँ तत सत् ब्रह्मार्पणमस्तु ॥

(श्रौत-स्मार्त्त कर्मकाण्डके धुरन्धर विद्वान् तथा काशी हिन्दू विश्वविद्यालयके पौरोहित्य-विभागके अध्यक्ष पंडित भीमसेनजी वेदपाठीके मूल हस्तलिखित की यह प्रतिलिपि उनके प्रपौत्र श्रीविवेकशील चतुर्वेदीने प्रस्तुत की।)



परिशिष्ट-६

## यज्ञ चित्रावली संख्या-१



# यज्ञ चित्रावली संख्या-२



## यज्ञ चित्रावली संख्या- ३


यजमानासन


पत्न्यासन


होत्रासन


ब्रह्मासन


पुरोडाश पात्री


प्रणीता


उपभृत् स्रुक


जुहू


ध्रुवा स्रुक


पुष्कर स्रुक


अग्निहोत्र हवणी

वैकंकत स्रुवा


उलूखल


मूसल


शूर्प


दृषद्


उपला


शम्या


स्फ्य

# यज्ञ चित्रावली संख्या-४

## आपस्तम्ब श्रौत सूत्रानुसारिणी सोमयागार्थ महावेदिः



# यज्ञ चित्रावली संख्या-५

## अतिरात्र याग भूमिका चित्र



